**तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति दाम्यत दत्त दयध्वमिति। तदेतत्त्रयं शिक्षेद्दमं दानं दयामिति।**

---

पदिशति । तस्मात्पुत्रानुशासनं प्रजापतेः परममेतद्धितम् । अतोमनुष्यैरेवै तत्त्रयं शिक्षितव्यमिति ।

अथवा नदेवा असुरा वाऽन्ये केचन विद्यन्ते मनुष्येभ्यः । मनुष्याणामेवादान्ता येऽन्यैरुत्तमैर्गुणैः सम्पन्नास्तेदेवा, लोभप्रधाना मनुष्यास्तथा हिंसापरा क्रूरा असुरास्त एव मनुष्या अदान्तादिदोषत्रयमपेक्ष्य देवादिशब्दभाजो भवन्तीतरांश्च गुणा-न्सत्त्वरजस्तमांस्यपेक्ष्य । अतो मनुष्यैरेव शिक्षितव्यमेतत्त्रयमिति । तदपेक्षयैव प्रजापतिनोपदिष्टत्वात् ।

तथा हि मनुष्या अदान्तलुब्धाः क्रूराश्च दृश्यन्ते तथा च स्मृतिः "कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्" इति ॥ ३ ॥

इति बृहदारण्यकोपनिषद्भाष्ये पञ्चमाध्यायस्य द्वितीयं ब्राह्मणम् ॥



# नाम्नामाख्यातजत्वप्रतिपादनम् ।

( निरुक्तम्—अ. १ पा. ४, ( ख-१२-१४ )

**इतीमानि चत्वारि पदजातान्यनुक्रान्तानि, नामाख्याते,चोपसर्गनिपाताश्च ॥ १ ॥**

**तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च ॥ २ ॥**

---

**इति**—करणोऽधिकारपरिसमात्यर्थः।"इमानि चत्वारि पदजातान्यनुक्रान्तानि—नामाख्याते, चोपसर्गनिपाताश्च" इति प्रतिज्ञाभ्यासो निगमनार्थः । **इतीमानि-चत्वारि पदजातानीति**-व्याख्याय **अनुक्रान्तानि** अनुपूर्वेण पूर्वमाख्यातम् , ततो निपाता इत्येवमानुपूर्व्येण **क्रान्तानि** वर्णितानि । व्याख्यायेति वाक्यशेषः । कतमानि पुनस्तानि ? नामाख्याते चोपसर्गनिपाताश्च इति । तदपि व्याख्यातमेव । १-१२-१

यच्च तदुक्तं-'नाम्नः किंचिदवशिष्यते तच्चतुर्थेन पादेन वर्णयिष्याम' इति, तदिदमेवावसरप्राप्तं पदचतुष्टयलक्षणानन्तरमारभ्यते,—"तत्र नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च" । तत्र तस्मिन्नेव पदचतुष्टये यानि **नामानि** तानि तानि सर्वाण्येवाविशेषेणाख्यातजानीत्येवं **शाकटायन** आचार्यो ब्रवीतीति वाक्यशेषः । **नैरुक्तानां** चैष **समयः** सिद्धांतः सर्वेषामविशेषेण-गार्ग्यवर्ज्यम् ॥ १-१२-१ ॥

आह—कः पुनरन्यथा ब्रवीति, येनैवमुच्यते शाकटायनो ब्रवीतीति ? उच्यते—'न सर्वाणीति गार्ग्यः ब्रवीति । किं गार्ग्य एव ब्रवीति ? नेत्युच्यते **"वैयाकरणानां चैके"** व्याकरणमधीयते ये ते वैयाकरणाः, तेषां चैके न सर्वाण्याख्यातजानि नामानीत्येवं ब्रुवत इति वाक्यशेषः ॥ १-१२-३ ॥

**न सर्वाणीति गार्ग्यो वैयाकरणानां चैके ॥ ३ ॥**

**तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां-संविज्ञातानि तानि । यथा—गौरश्वः पुरुषो हस्तीति ॥ ४ ॥**

---

"तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां संविज्ञातानि तानि। यथा—गौरश्वः पुरुषो हस्तीति इति तदेतत् प्रपञ्च्यते गार्ग्यपक्षेण। यान्याख्यातजानि नामानि, यानि वा नेति एवं पर्य्युपयुक्तस्तच्छब्दः। इह त्रिविधा व्यवस्था नाम्नाम्। तद्यथा—प्रत्यक्षक्रियाणि, प्रकल्प्यक्रियाणि, अविद्यमानक्रियाणि इति। तत्र प्रत्यक्षक्रियाणि, तद्यथा—डित्थो डवित्थः, अरविन्दो वार्विण्ड इति। तत्रैवं सति **यत्र** येष्वित्यर्थः। केषु? नामसु **स्वरसंस्कारौ स्वर**श्चोदात्तादि **संस्कार**श्च प्रकृतिप्रत्ययादिभिः, एतौ स्वरसंस्कारौ। **समर्थौ** समर्थता नामोपपत्तिरुच्यते सङ्गतार्थौ, लक्षणशास्त्रविहितयोपपत्यायुक्ताविर्त्यथः। यथैव लक्षणाविप्रतिपत्त्या स्वरोऽवस्थित एवं संस्कारोऽपि। येष्वपि च **प्रादेशिकेन** प्रदिश्यते द्रव्यमनेनेति **प्रदेशः क्रिया** या तस्मिन् द्रव्ये अवस्थिता—यद्धेतुकस्तस्य नामधेयप्रतिलम्भोऽभिप्रेतस्तस्याः प्रदेशाख्यायाः क्रियाया अभिधायको यो धातुः स **गुण** इत्युच्यते। अन्यत्र हि गुणशब्दाऽप्रधाने वर्त्तते। शेषः, अङ्गं, गुणः इति समानार्थाः। प्रधानं तु तत्र क्रिया प्रदेशाख्या, तदभिधायको धातुः गुणाख्यः, स प्रदेशवाचकत्वात् प्रादेशिको गुण इत्युच्यते, तेन धातुरूपेणा**न्विता**वनुगतौ स्वरसंस्कारौ स्यातां भवेतां येषाम्।

आह-किं तेषामिति? उच्यते-**संविज्ञातानि तानि**। समं विज्ञातानि ऐकमत्येन विज्ञातानीत्यर्थः, तेषु तावदविप्रतिपत्तिरेवास्माकमाख्यातजानि नामानीति तद्यथा-कर्त्ता, कारकः, पक्ता, पाचक इति। न पुनर्यथा-**गौरश्वः पुरुषो हस्तीति**' किं कारणम्? एतेषु प्रकल्प्यन्ते क्रियाः, न साक्षादुपलभ्यन्ते। अपि चैतेषु कल्पयितुमपि तावच्छक्यन्ते। न डित्थादिषु पुनः कल्पयितुमपि शक्यन्ते। तस्मान्न सर्वाण्याख्यातजानि नामानीति। तद् यदुक्तं 'सर्वाण्याख्यातजानि नामानि' इति, तदयुक्तम्। रूढिशब्देषु च क्रियाः केवलं शब्दव्युत्पत्तिकर्मण्युपलक्षणभूता निमित्तभावेनोपादीयन्ते, न वस्तुतोऽर्थक्रियास्वनुसहायभावं प्रति। तत्र शब्दस्याप्रच्युता ( रूढेः )। उपलक्षितेऽनुप्रवृत्तेऽभिधाने निवृत्तायां क्रियायामुपर-

**अथ चेत् सर्वाण्याख्यातजानि नामानि स्युर्यः कश्च तत्कर्म कुर्यात् सर्वं तत् सत्त्वं तथाऽचक्षीरन् यः कश्चाध्वानमश्नुवीताश्वः स वचनीयः स्याद् यत् किञ्चित् तृन्द्यात्तृणं तत् ॥ ५ ॥**

---

तसाधनव्यापारं निरूप्य, क्रियायामभिधानं वस्तुमात्रस्य प्रतिनिर्देशकं रूढिरित्यभिधीयते ।

अपरो व्याख्यामार्गः—तत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याताम् । **यत्र** यस्मिन्नाम्नि **स्वरसंस्कारौ, समर्थौ** अष्टाध्यायीलक्षणोपपत्त्या युक्तौ, प्रदेशाभिधायिना च धात्वाख्येन **प्रादेशिकेन गुणेनान्वितौ** अनुगतौ, स्यातां न्यायवत्कार्मनामिकसंयुक्तेन संस्कारेण । तद्यथा-कर्ता, कारकः, पक्ता, पाचक इत्येवमादि । तदाख्यातजं गुणकृतमिति प्रतीम इति वाक्यशेषः । येषु पुनरष्टाध्यायीलक्षणपराङ्मुखौ स्वरसंस्कारावननुगतौ, न्यायवत्कार्मनामिकसंस्कारयुक्तेन प्रदेशाख्येन धातुरूपेण । किं तेषामिति ? उच्यते-'**संविज्ञातानि तानि** ।' संविज्ञानपदमितीह शास्त्रे रूढिशब्दस्येयं संज्ञा । वक्ष्यति हि, अग्निरिन्द्र इत्येवमादीनां संविज्ञानपदत्वम् 'यत्तु संविज्ञानभूतं स्यात्' इति । तथा वृत्रहा पुरन्दर इत्येवमादीनां गुणपदत्वम् । स एवायमिहापि विभागो द्रष्टव्यः । तत्र गुणपदानि,-कारकपाचकादीनि । संविज्ञानपदानि तानि "**यथा-गौरश्वः पुरुषो हस्ती**" इत्येवमादीनि । न ह्येषां गवादीनाम् अष्टाध्याय्यां व्युत्पत्तिलक्षणमस्ति, तस्माद्रूढिशब्दा एवैत इति ।

अन्ये तु प्रदेशो व्याकरणमिति व्याचक्षते । तत्र हि शब्दानां लक्षणानि प्रदिश्यन्ते । तत्कृतः क्वचिल्लक्षणानुग्रहः लक्षणावयवो वा गुण इत्युच्यते,-प्रसिद्धो हि गुण शब्दोऽनुग्रहेऽवयवे च । तद्यथा- गुणे ममायं वर्त्तते'इत्युक्तेऽनुग्रहे वर्त्तते इति गम्यते । अवयवेऽपि—'द्विगुणा रज्जुः' त्रिगुणा इति चोक्ते द्व्यवयवा त्र्यवयवेति वा गम्यते । शेषं समानमेवपूर्वाभ्यामर्थाभ्याम् ।

अथवा ' संविज्ञानानि तानि' संविज्ञातानि तानि च' इत्युभावप्येतौ पाठौ । तस्मादुभयथाऽपि व्याख्यातव्यम् । सत्त्वं प्रदेश इति केचिदङ्गभूता क्रिया गुण इति व्याचक्षते ॥१-१२-४॥

किं चान्यत् ? 'अथ चेत्सर्वाण्याख्यातजानि नामानि स्युः । तथाप्ययमपरो दोषः प्रसज्यते । आह—कतम इति ? 'यः कश्च तत् कर्म कुर्यात् सर्वं तत्सत्त्वं तथाचक्षीरन्, यः कश्चाध्वानमश्नुवीत,अश्वः स वचनीयः स्याद, यत् किञ्चित् तृन्द्यात्

**अथापि चेत् सर्वाण्याख्यातजानि नामानि स्युर्यावद्भिर्भावैः सम्प्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात् तत्रैवं स्थूणा दरशया वा सचनी च स्यात् ॥ ६ ॥ १२ ॥**

---

तृणंतत् इति । **यः कश्चा**विशेषेण प्राणी **तत् कर्म कुर्यात्,** यत् किंचिदनेक-प्राण्याश्रेमकवदीभिप्रत्योच्यते—तत्कर्म कुर्यादिति । **सर्वमेव तत्सत्वं तथा** तेनैवैकेन नाम्ना आचक्षीरन् तद्यथा—**यः कश्चाध्वानम**विशेषेणानश्वोऽ **प्यश्नुवीत अश्व इत्येवं स वचनीयः स्यात्**। कस्माद्वाश्वः अश्नुवन्नश्व इत्युच्यते अन्योऽश्नुवन्नपि नोच्यते इति विशेषहेतुर्नास्तीति । तस्मादश्वोऽपि नैवाशनक्रियायोगाभिप्रायेणाश्व इत्युच्यते, किं तर्हि ? शब्दव्यवहार एवायमर्थप्रत्यायनार्थ ईदृशः क्रियानिरपेक्षः । एवमेव **यत् किञ्चित्** तृन्द्यादविशेषेणतत्सर्वं तदनक्ति योगात् तृणमित्येवमुच्येत,न चोच्यते । तस्मान्न सर्वाण्याख्यातजानि नामानीति ।

किञ्चान्यत् ? **'अथापि चेत्'** अथापि यदि । 'सर्वाण्याख्यातजानि नामानि स्युः' । तथाप्ययमपरो दोषः स्यात् । आह—कतम इति ? उच्यते—"यावद्भिर्भावैः सम्प्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यात् तत्रैवं स्थूणा दरशया वा सचनी च स्यात् ।" क्रियाहेतुके हि नामधेयप्रतिलम्भे सति यावद्भिर्भावैर्यावतीभिः क्रियाभिरेकं द्रव्यं संयुज्येत, तावद्भ्यो भावेभ्यस्तावतीभ्यः क्रियाभ्यो नामधेयप्रतिलम्भः स्यात् । किं कारणम् ? न हि तत्र कासाञ्चिद्व्यावर्तको विशेषहेतुरस्ति, अन्यासां वा नियामकः । **तत्रैवं** सति स्थूणा एकैव सती दरे शेते इति दरशया इत्युच्येत, न चोच्यते। तथा च सज्यते ऽस्यां वंश इति सचनीत्युच्येत, न चोच्यते । एवमनेकानि सत्त्वानि एकक्रियायोगादेकनामानि स्युः, एकं वानेकक्रियायोगादनेकनाम, उभयथापि (च) व्यवहारप्रसिद्धिः । तस्मान्न सर्वाण्याख्यातजानि नामानीति । १।१२।६॥

**अथापि चेत्—अथ** पूर्ववयर्थे, **चे**च्छब्दाच्च परो द्रष्टव्यः, चेच्छब्दश्च शब्दस्यापि च यदि **सर्वाण्याख्यातजानि नामानि स्युः यावद्भिर्भावैः** क्रियाभिः सम्प्रयुज्येत तद्द्रष्टव्यं, **तावद्भ्योऽस्य नामधेयप्रतिलम्भः स्यात्। तत्रैवं** सति **स्थूणा**—दरे शेते व्यवतिष्ठत इति **दरशया वा ऽऽसचनी च स्यात्** सचतिर्गतिकर्मा, निधीयमानो वंशो ऽन्यद्वा आसचति—आगच्छत्यस्यामि-

**अथापि य एषां न्यायवान् कार्मनामिकः संस्कारो यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन् पुरुषं पुरिशय इत्याचक्षीरन्नष्टेत्यश्वं तर्दनमिति तृणम् ॥ १ ॥**

---

त्यासचनी । आसंजनीति त्वयमपपाठः । संजेर्ल्युट्युपधाया नकारस्य लोपाभावात्, नकाररहितस्य सजेर्धातोरभावान्न खेतयुक्तमुदाहरणम् । दरशयासचनीशब्दौ हि क्रिया-योगशब्दौ न रूढिशब्दौ, तौ स्थूणायामन्यत्र च स्तः, अतस्तत्रैवं गौरश्वोऽश्वोगौश्च स्यादित्युदाहरणम् ।

'अथापि—'चैतदन्यत्स्यात् यदि सर्वाण्याख्यातजानि नामानि स्युः । आह—किमिति ? उच्यते—'य एषां न्यायवान् कार्मनामिकः संस्कारो यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन् ।' य एषां पुरुषाश्वादिनाम्नां **न्यायवान्** लक्षणन्यायेन युक्तः ।

आह—कः पुनरसाविति ? उच्यते **कार्मनामिकः संस्कारः** । कर्मकृतं नाम कर्मनाम तत् पुनः पाचकलावकादि, तस्मिन् भवः कार्मनामिकः संस्कारः । किञ्च, **यथा चापि प्रतीतार्थानि स्युः** प्रतीतक्रियाणि स्युः, **तथैवैनान्याचक्षीरन् जनाः** ।

आह—कथं पुनराख्यायमानान्येतानि न्यायवता कार्मनामिकेन संस्कारेणोपेतानि स्युः कथं वा प्रतीतक्रियाणीति ? उच्यते-**पुरुषं** तावत् **पुरिशय इत्याचक्षीरन्** । पुरि ह्यसौ शेते इति पुरिशयः प्राप्नोति । एवमसौ न्यायवता कार्मनामिकसंस्कारयुक्तेन शब्देनोक्तः स्यात् एवं चैष प्रतीतक्रियः शब्दो भवति, एवमेव **अष्टा इत्यश्वम्** आचक्षीरन्-अश्नोति हि असौ इति अष्टा प्राप्नोति । एवमेव तर्दतेऽनेनेति **तर्दनमिति तृणम्** । आचक्षीरन् । न चैवमाचक्षते । न चासति कारणे विद्यमाना क्रिया परोक्षीकर्तुं न्याय्या, तस्मान् न सर्वाणि आख्यात-जानि नामानीति ॥ १ । १३ । १ ॥

**अथापि** इदमपरमप्राप्तं कुर्वन्ति, ते शाकटायनादयः । किम् ? **निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति, प्रथनात् पृथिवीत्याहुः, क एनामप्रथयिष्यत्—इति** । **निष्पन्ने** कस्मि नभिव्याहारे, अभिव्याहरणमभिव्याहारः तस्मिन्

**अथापि निष्पन्नेऽभिव्याहारेऽभिविचारयन्ति प्रथनात् पृथिवीत्याहुः क एनामप्रथयिष्यत् किमाधारश्चेति ॥ २ ॥**

---

**भिव्याहारे,** ततः पश्चादभि आभिमुख्येन स्थित्वा तस्याभिधानस्य, ततो **विचारयन्ति**—कतमस्य धातोरत्र रूपमिति ? आह तथा किमिति । उच्यते-तद्यथा **प्रथनात् पृथिवीत्याहुः** । ते शाकटायनादयः ।

आह—ततः किमिति ? उच्यते-तत्र वयं पृच्छामस्तान्-यदीयं स्वभावत एव पृथिवी नाभविष्यत् ? ततः **क एनाम**पृथिवीं सतीम**प्रथयिष्यत्** ? कोऽस्याः प्रथनमकरिष्यदित्यभिप्रायः ।

अथापि कश्चिदस्याः अपृथिव्याः सत्याः प्रथनकर्त्ताभ्युपगम्येत, ततोऽपि च वयमिदमपरं पृच्छामः **किमाधारश्च इति** । चशब्दः समुच्चयार्थः सर्वस्य हि प्राणिजातस्येयमेवाधारः प्रतिष्ठा, अथ पुनर्यदेयमप्रथितासीत्, तदा योऽस्याः प्रथयिता स **किमाधार** आसीत् ? न ह्यनाधारेणाप्रतिष्ठितेन शक्येयं प्रथयितुम् स चाधारो नास्तीति प्रथनक्रियाभावः, प्रथनक्रियाभावे च सति क्रियाजान्येवमादीनि नामानीत्येतदयुक्तम् । तस्मान्न सर्वाण्याख्यतजानि नामानीति । १-१३-२

**अथ** अपि इदमपरमप्राप्तं शाकटायनः कृतवान् । आह-किमिति ? उच्यते—**अनन्वितेऽर्थे** इत्येवमादिदोषः । आह-वेदाङ्गानामेकैकमनेकप्रभेदम् । तद्यथा—निरुक्तं चतुर्दशप्रभेदम् । **व्याकरण**मष्टप्रभेदम् । तत्र केषाञ्चिन्नैरुक्तानां कैश्चिद्वैयाकरणैः सार्कं केषुचिच्छद्वेष्वैकमत्यं केषाञ्चिद्वैमत्यम् । तत्र शकटायनो नैरुक्तश्च गार्ग्यवर्जं कानिचिदभिधानान्यनेकैर्धातुभिरनुविदधाति, कानिचिदेकेनैव । किं कारणम् ? प्रतिनियतो हि स्वेषु स्वेषु व्याकरणेषु शब्दानुविधानस्य समयः । तद्यथा—पाणिनीया भू इति प्रकृतिमुपादाय लडित्येतं प्रत्ययमुपाददते । ततः कृतानुबन्धलोपस्यानचूकस्य लस्य स्थाने तिबादीनादिशन्ति, तथाहि ते तं शब्दमनुविधातुं शक्नुवन्ति । स हि तेषां शब्दानुविधानोपायः पाणिनिना परिक्लृप्तः । सैषा शब्दानुविधाने तन्त्रशीलीत्येतदेवैकं प्रयोजनमुक्त्वा नान्यत् प्रयोजनमस्ति लडादीनामनुबन्धानामभ्ययने लोपे च । अपरे पुनर्वैयाकरणा लटमकृत्वैव तिबादीनेवोपाददते । तेषामपि हि शब्दानुविधाने सा तन्त्रशीली एवं प्रतिनियतया स्वया स्वया तन्त्रशील्या भवतीत्येवामादिसमानमेव शब्दरूपं साधयन्ति । तत्रैवं शब्दानुविधा-

**अथाननिवतेऽर्थेऽप्रादेशिके विकारे पदेभ्यः पदेतरार्धान् सञ्चस्कार शाकटायन एतेः कारितञ्च यकारादिञ्चान्तकरणमस्तेः शुद्धं च सकारादिं च ॥३॥**

नोपायविप्रतिपत्तौ सत्यां शाकटायन आचार्योऽनेकैश्च धातुभिरेकमभिधानमनुविहितवान्, एकेन चैकमेव । तत्र यदनेकैरनुविहितवान् तदितरैर्गार्ग्यपाणिन्यादिभिर्न मृष्यते । किं कारणम् ? अप्रसिद्धो हि स तेषां शब्दानुविधानमार्गः । धातुसमुदायमात्रमेव नामेति । अतस्ते शाकटायनमाचिक्षिप्सन्त आहुः—**अथानन्वितेऽर्थे** इति । **अनन्वितेऽर्थे** अननुगते शब्देनार्थेयत्र संस्कार्यमाणोऽपि शब्दोऽर्थमनुगन्तुं न शक्नोति । एवं धातुजोऽ समर्थो भवति ।

**अप्रादेशिके विकारे** च । हि क्रियया तद् द्रव्यं प्रदिश्यते, तदभिधायको योधातुः, स तदाभिधानं विगृह्यमाणं विकर्तुं न शक्नोति—य (त) त्र ।

तत्र हीयमानप्रतिज्ञः शाकटायनः सर्वाण्याख्यातजानि नामान्युपपादयिष्यन्नसम्भवे सति काश कुश विलम्बनमिव कुर्वन् किमकरोदिति ? **पदेभ्यः पदेतरार्द्धान् सञ्चस्कार शाकटायनः पदेभ्यः** आख्यातपदेभ्यः समस्तेभ्योऽवयवानुपादाय **पदेतरार्द्धान्** अन्यांश्चान्यांश्च इतराख्यातपदावयवैरन्यैश्चान्यदन्यदर्द्धं नाम्नः संस्कृतवान् ।

तद्यथा—सत्यम्—इत्येतदभिधानं सञ्चकार। कथम् ? **'एतेः कारितं च यकारादिं चान्तकरणमस्तेः शुद्धं च सकारादिं च ।"** एतेः 'इण गतौ' ( अ. प. )-इत्यस्य **कारितं** ण्यन्तं रूपं कृत्वा ततो **यकारमादाय** मकारान्तं कृत्वा सत्यशब्दस्यान्तमर्द्धं सञ्चकार, ततो 'यम्'—इति भवति । अस्तेः शुद्धं च । 'अस भुवि ( अ. प. )'—इत्येतस्य शुद्धमेव रूपं कृत्वा तकारान्तमित्यर्थः ततः सकारादिशब्दरूपं गृहीत्वा 'सत्—इत्येत्' सत्यम्'—इत्येतस्य शब्दस्य आदिमकरोत् आद्यमर्धं सञ्चकार । तत् सदिति भवति। अत्र योऽयमस्तेस्तकारः स यकारमधिरोहति । एवमेतदेकमभिधानं द्वयोर्धात्वोः सञ्चकार सत्यमिति ।

अथ कोऽर्थः ? सन्तमर्थमाययति प्रत्याययति गमयतीति सत्यम् । कारितं च यकारादिञ्च शुद्धंञ्च सकारादिं चेति इतरस्माच्चेतरस्माच्चेतरं चेतरं चार्द्धमिति समुच्चयार्थाश्चकाराः । एवं पदेभ्यः पदेतरार्द्धान् सञ्चस्कार शाकटायनः, तदेतदन्याय्यं

**अथापि सत्त्वपूर्वो भाव इत्याहुरपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यत इति तदेतन्नोपपद्यत ॥४॥१३॥**

**यथो हि नु वा एतत्तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां सर्वं प्रादेशिकमित्येवं सत्यनुपालम्भ एष भवति । ॥ १ ॥**

---

कृतवान् को हि नाम पदं विभज्यानेकधातुजं कुर्यात् । तदेतदेकृतपूर्वमन्यैर्विद्वद्भिः शाकटायनोऽतिपाण्डित्याभिमानादकरोत्—यदाभिनत्पदानि ।

अपि चोपजायते नः शङ्का,-यथासौ प्रवृत्तो नासौ पदेषु स्थास्यति अपि चासौ वर्णानपि भेत्स्यति, अनेकार्थांश्च कल्पयिष्यति । यो हि पदान्यभिनत् तस्य वर्णाभेदे विशेषहेतुः को भविष्यति ? तस्मादतिप्रसङ्गदोषोपपत्त्या नानेकधातुजानि, नापि सर्वाण्याख्यातजानीति ॥ १।१३।३ ॥

**अथापि** अयमपरो दोषः प्रसज्येत । कतमः इति ? आहुः—**'सत्त्वपूर्वो भाव इत्याहुः'** अभियुक्तास्तद्विदः । सत्त्वं पूर्वमस्मात्सोऽयं सत्त्वपूर्वः । किं कारणम् ? सत्त्वाश्रय एव ह्यसौ । तत्रैवं सति **'अपरस्माद्भावात्'** अपरकालीनेन भावेन क्रियया **पूर्वस्य** पूर्वोत्पन्नस्य सत्त्वस्य **प्रदेशः** प्रदेशनं संज्ञाप्रतिलम्भो **नोपपद्यते** । किं कारणम् ? उत्पत्तिसहभूता हि सा, स्वेनाभिधानेन क्रियानिरपेक्षेणाभिसम्बद्धमेवं द्रव्यमुत्पद्यते,—नित्यसम्बद्धौ हि शब्दार्थौ । **इति तदेतत्** सर्वथा सर्वाण्याख्यातजानि नामानीति शाकटायनमतं **नोपपद्यते** । तदनुपपत्तावस्मत्पक्षसिद्धिः—कानिचिदनाख्यातजानि नामानि, कानिचिदाख्यातजानि । अथ शक्यते प्रत्यवस्थातुं प्रत्यवस्थीयतामिति परिसमाप्तो गार्ग्यः पक्षः ।१।१३।४

शाकटायनपक्षेणेदानीमेतान् दोषान् प्रतिसमाधास्यामस्तदर्थमिदमारभ्यते—

**'यथो हि नु वा एतत्'** इति । यथेति वाक्योपादाने, **यथा** येन प्रकारेण । **उकारो**ऽवधारणार्थः व्याख्यातमेतत्—**अथाप्युकार एतस्मिन्नेवार्थे** । इतरेण येनैव प्रकारेण प्रसिद्धमाचार्येणाख्यातजत्वं प्रतिषिद्धं नाम्नः, तेनैव प्रकारेण प्रत्यनुभाष्यं समीकरिष्यामीति । **हि**—इत्यसूयायाम् कथं हि व्याकरिष्यतीति । **नु**—इत्येष हेत्वपदेशे । **वै**—इत्ययं यथोक्तपूर्वपक्षोपदेशार्थः, येनैव प्रकारेणासमर्था हेतव उक्ताः, तेनैव प्रकारेण प्रत्यनुभाष्यं प्रतिवक्तृधर्मेण समीकरिष्यामः ।

**यथो एतद्यः कश्च तत्कर्म कुर्यात् सर्वं तत्सत्त्वं तथाचक्षीरन्निति पश्यामः समानकर्मणां नामधेयप्रतिलम्भमेकेषां नैकेषां यथा तक्षा परिव्राजको जीवनो भूमिज इति ॥२॥**

---

यथैतदुक्तं किमिति ? **तद्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्याताम्** । इति । आह—सर्वं तत्र किमिति ? उच्यते-तदेतत् प्रत्युच्यत इत्युपयुक्तत्वाच्छंदः ।

आह—केन पुनः प्रकारेण प्रत्युच्यत इति ? उच्यते—**सर्वं प्रादेशिकमित्येवं सत्यनुपालम्भ एष भवति** । सर्वमेव प्रादेशिकं सर्वमेव क्रियाजं नाम । आह—ततः किम् ? **इत्येवं सत्यनुपालम्भ एष भवति** । आह—कथमत्र शृणु—प्रदेशवाचिन आख्यातानुत्प्रेक्ष्य तदाश्रयौ स्वरसंस्कारौ यावद्गम्यमनुविधेयौ,—विभ्वी हि लक्षणगतिः । नैष शब्दापराधो नाप्यस्माकम् । भवत एवायमपराधो मन्दशिक्षितत्वात्—येनानुविधातुं स्वरसंस्कारौ विद्यमानावपि प्रदेशवाचिनि धातौ न शक्नोषि, सत्त्वं तावत् पुनः पुनः शिक्षस्वान्यद्याकरणं यावच्छक्तिस्तवानुविधातुमिति । व्याकरणेऽप्यष्टधा भिन्ने लक्षण एकैकदेशो विक्षिप्तः । कश्चित् सौत्रो धातुः, कश्चित् तुशद्बचशब्दावाशब्दातिरिक्ताध्याहारयोगविभागादिगम्यः तद्यथामतान्तरेष्वप्यभिन्नेषु कश्चित् क्वचिद्विधिरुच्यते । ते च सर्व एव प्रयोगमिच्छता प्रयोगकाल उपसंहर्त्तव्याः । एवमिहापि सर्वाण्येव लक्षणशास्त्राण्यपेक्ष्याणि अखिलस्वर—संस्कारसिद्धयेऽभिस्वरसंस्कार वा—इति । स त्वं तावत् शिक्षस्वानिर्विण्णः, यावदखिलशब्दानां स्वरसंस्कारावनुविधातुमुपज्ञातुं सामर्थ्यमिति ।

**यथा एतत्** यत् पुनरेतदुक्तम्,—**यः कश्च तत् कर्म कुर्यात्, सर्वं तत् सत्त्वं तथाऽचक्षीरन्निति** । अनेकेषामेकक्रियायोगादेकनामता प्रसज्येतेति ।

अत्र ब्रूमः—न हि प्रसज्यते । त्वमपि पश्यसि वयमपि च **पश्यामः समानकर्मणाणू"** तुल्यकर्मणामपि सतां कर्मकृतां **"नामधेयप्रतिलम्भमेकेषां नैकेषां यथा—तक्षा परिव्राजको जीवनो भूमिज इति** । तक्षन् कश्चित् तक्षेत्युच्यत । अन्यः तक्षन्नपि न तक्षेत्युच्यते । आह—कोऽत्र हेतुरिति ? शृणु—लोकमेव पृच्छ, तमेवोपालभस्व, न मयैष नियमः कृतः इति । अथ च तद्यथा,—समानमीहमानानां कश्चिदेवार्थेन संयु[illegible]ते, कश्चिन्न, न चेदानीम्,

**एतेनैवोत्तरः प्रत्युक्तः ॥३॥**

**यथो एतद्यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति । सन्त्यल्पप्रयोगाः कृतोऽप्येकपदिका यथा व्रततिर्दमूना जाट्य आट्णारो जागरूको दर्विहोमीति ॥४॥**

---

एकोऽर्थेन संयुज्यत इति अन्यैरपि संयुक्तम् सत्यमेकेन न लभ्यत इत्यन्यैरपि चालब्धम्। स्वभावतो हि शब्दानां क्रियाजत्वेऽपि सति काश्चिदेव क्रियामङ्गीकृत्यावस्थितिर्भवतीति । अथवा क्रियातिशयकृतो नियमः स्यात्,—यो हि यदतिशयेन करोति, तस्यानेकक्रियावत्वेऽपि सति तद्धेतुक एव नामधेयप्रतिलम्भो भवतीत्ययं समाधिः ।

अथवा न ब्रूमः—यो यत्र यदा च तक्षति, स एव तक्षेति । किं तर्हि ? यो यदा यत्र तक्षा भवति, स एव तक्षेति । तदेल्लक्षणं क्रियया नियतं, काममन्येष्वप्यस्तु कदाचित् क्वचित् तेषामप्यन्याः क्रिया नियततराः सन्ति, यद्धेतुको नामधेयप्रतिलम्भ इति । तेषां तु तक्षा नियमतः तक्षतीति विशेषः । जीवन इक्षुरसः, शाकजातिर्वा । भूमिजोऽङ्गारकः, वृक्षो वा, ॥१॥१४॥२॥

**एतेनैवोत्तरः प्रत्युक्तः** । आह—कतमः ? **यावद्भिर्भावैः सम्प्रयुज्येत तावद्भ्यो नामधेयप्रतिलम्भः स्यादित्येषः**, पश्यामोऽनेकक्रियायुक्तानामपि एकक्रियाकारितो नामधेयप्रतिलम्भो भवति । तद्यथा—तक्षा, परिव्राजक इत्येतान्येवोदाहरणानि । तक्षा ह्यन्यान्यपि कर्माणि करोति । न पुनस्तस्य तत्कृतो नामधेयप्रतिलम्भोऽस्ति । तत्र यदुक्तम् 'एकस्यानेकक्रियायोगादनेकनामता प्रसज्येत' इति । एतदयुक्तम् न हि प्रसज्येत । यदि चोक्तमनेकेषामेकनामता, एकस्य चानेकनामता प्राप्नोति—ततश्च व्यवहाराप्रसिद्धिरिति, न हि तदुभयमस्ति । अनेकेषामेकक्रियायोगेऽपि हि सति एकस्य चानेकक्रियायोगेऽपि हि सति व्यवस्थित एव शब्दनियमः स्वभावत एव लोके । तस्मान्न व्यवहाराप्रसिद्धिदोषोऽस्ति तत्र यदुक्तं व्यवहाराप्रसिद्धिदोषप्रसङ्गान्न सर्वाण्याख्यातजानि नामानीति इति एतदयुक्तम् ॥१॥।४॥३॥

**यथो एतत्** यत् पुनरेतदुक्तम्—**यथा चापि प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति** । अत्र ब्रूमः—शब्दस्वाभाव्यमेतत्—यन्न तथा सर्वाण्याख्यायन्ते, यथा यथा प्रतीतार्थानि भवन्ति, न तत्राहमपराध्ये भवतः, नापि शास्त्रम् ।

**यथो एतन्निष्पन्नेऽभिव्याहारेऽभिविचारयन्तीति, भवति हि निष्पन्नेऽभिव्याहारे योगपरीष्टिः—प्रथनात् पृथिवीत्याहुः**

---

यथावस्थितानां हि शब्दानामन्वाख्यानमात्रमेव क्रियते। नाहं शब्दानां कर्त्ता, य एषां प्रयोक्तारस्तानेवोपालभस्व, निराकुरु वा यदि शक्नोषि।

आह—कस्मात् पुनः कानिचिदाख्यायन्ते लोके ? तदभिधानस्वाभाव्यमेव। कानिचित्प्रतीतार्थानि, कानिचिदप्रतीतार्थानि, तान्यपि शास्त्रेण प्रतीतार्थान्येव कर्त्तव्यानि। एतदेव शास्त्रस्य कामीतन्त्रम् यदप्रतीतार्थान्यपि प्रकृत्यादिना प्रतीतार्थानि स्युस्तथैनान्याचक्षीरन्निति। आख्यायन्त एव कानिचित् कानिचिच्छास्त्रेण प्रतीतार्थानि क्रियन्ते। रूढ्यनुविधायित्वाल्लक्षणशास्त्रस्य, गुणतस्तेषु लक्षणम्। अपि च **सन्ति एव अल्पप्रयोगाः** प्रतीतार्थक्रियाः केचित् कृतः कृत्प्रत्ययान्ताः **अपि एकपदिकाः** एकपदप्रकरणान्तर्वर्तिनस्तद्धर्माणः। तत् **यथा व्रततिर्दमूना जाट्य आटूणारो जागरूको दर्विहोमीति**। व्रतति वृणातेः—वल्ली। **दमूना** दममना वेत्येवमादि, अग्निरतिथिर्वा। **जाट्यः** जटावान् **आटूणारो** अटनशीलः। **जागरूको** जागरणशीलः। **दर्विहोमीति** दर्व्या जुहोतीत्येवं प्रतीतार्थान्यपि इति शाकटायनाभिप्रायः। तत्र यदुक्तं—'न सर्वाण्याख्यातजानि नामानीति एतदयुक्तम्॥१॥१४॥४॥

**यथो एतत्**—यत् पुनरेतदुक्तम्,—'**निष्पन्नेऽभिव्याहारेऽभिविचारयन्तीति**' अत्र ब्रूमः—युक्तं ते कुर्वन्ति—**भवति हि निष्पन्नेऽभिव्याहारे योगपरीष्टिः**। योगपरीष्टिर्नाम योगस्य परीक्षणम्। कथं वानुत्पन्नः सन्नभिधानयोगः परीक्ष्येत।

तत्र यदुक्तं—**प्रथनात् पृथिवीत्याहुः। क एनामप्रथयिष्यत् किमाधारश्चेति।**' न वयमेवं ब्रूमः—प्रथितेयं केनचिदतः पृथिवीयमिति।

आह—कथमियमप्रथिता सती पृथिवीत्वमाप्नोति ? उच्यते—**अथ वै दर्शनेन पृथुरप्रथिता चेदप्यन्यैः**। दृश्यमाना हीयं पृथिवी। तस्मात् यद्यप्यप्रथिता कैश्चिदन्यैस्तथापीयं पृथुदर्शनक्रियायोगात् पृथिव्येव।

तत्र यदुक्तं—**क एनामप्रथयिष्यत् किमाधारश्च**, इति। एतदयुक्तम्। अन्यथा हि धात्वर्थ उपपद्यत एव। तत्रैवं सति, यथा न विरोत्स्यते, तथा

क एनामप्रथयिष्यत् किमाधारश्चेत्यथ वै दर्शनेन पृथुरप्रथिता चेदप्यन्यैः ॥

अथाप्येवं सर्व एव दृष्टप्रवादा उपालभ्यन्ते ॥५॥

यथो एतत्पदेभ्यः पदेतरार्धान्सञ्चस्कारेति योऽनन्वितेऽर्थे सञ्चस्कार स तेन गर्ह्यः सैषा पुरुषगर्हा न शास्त्रगर्हा इति ॥६॥

---

निर्वक्ष्यामः । तस्मादविरुद्धः शाकटायनाभिप्रायः ।

अथापि च, यदि दृष्टेऽप्यस्याः पृथुत्वे न वयमुपलभ्यामहे । ननु एवं सति, "सर्व एव दृष्टप्रवादा उपालभ्यन्ते" न केवलमहमेव । यो यद्दृष्ट्वा ब्रवीति स तत्र दोष एव । तथा सति, दृष्टहानं प्रसज्येत, अनिष्टं चैतत् । तस्मात् पृथुदर्शनात् पृथिवीत्युच्यते ॥१॥१४॥५॥

यथो एतत् यत् पुनरेतदुक्तम्—पदेभ्यः पदेतरार्धान्संञ्चस्कारेति अत्र ब्रूमः—योऽनन्विते शब्देनानभिधेये अर्थे अननुगतमसम्बद्धं सञ्चस्कार, स तेन' असमञ्जसेनासम्बद्धेन संस्कारेण गर्ह्यः गर्हणीयः । न पुनराचार्यो योऽनुगमय्य धातुभिरनेकैरेकाभिधानगतानर्थांस्ततः सञ्चस्कार, नैव मौढ्येन । सैषा तदभिप्रायापरिज्ञानात् पुरुषगर्हा पुरुषो हि कश्चित् अशिक्षितत्वादेकधातुजमपि न जानाति, किमुत बहुधातुजम् अपि च, सन्ति लोके तादृशाः पुरुषाः, ये कारकहारकादीन्यपि प्रकटक्रियाणि सन्ति, कतमेभ्यो धातुभ्य एतान्यभिनिष्पाद्यन्त इति न जानते , एष पुरुषदोषः, न शास्त्रगर्हा इति न शास्त्रदोषः—यदनुगमयितुं धातुशब्दैरर्थो न शक्यते । तत्र यदुक्तम्-अनन्वितेऽर्थे प्रादेशिके विकारे पदेभ्यः पदेतरार्धान् संचस्कार शाकटायन इति । तदयुक्तम्,—अनुगत एवार्थे सञ्चस्कार शाकटायनः 'सन्तमेव ह्यर्थमाययति गमयतीति सत्यम्' इति । तस्मादुपपद्यत एव शाकटायनमतम् ।

अपि च, रूढिशब्दव्युत्पत्तिर्मन्त्रेष्वपि दृश्यते' यथा लक्षणम्, तथा लक्ष्यं प्रवर्त्तितुमर्हति, इतरथा हि कस्य तल्लक्षणं स्यात् । यदसर्पत् तत्सर्पिरिति मन्त्रः, यन्नवमेव नीतं तन्नवनीतमभवदिति मन्त्रः । अपि च ब्राह्मणेनाप्यनेकधातुजान्येव कृत्वा निरुच्यन्ते तत्र मन्त्राभिधानानि, तत्परिज्ञाने च फलमुपपद्यते । आह—तदेतत्त्र्यक्षरं हृदयमिति, 'हृ' इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद, 'द' इत्येकमक्षरन्ददत्यस्मै स्वाश्चान्ये च य एवं वेद, 'य'मित्ये-

**यथो एतदपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यत इति पश्यामः पूर्वोत्पन्नानां सत्त्वानामपरस्माद्भावान्नामधेयप्रतिलम्भमेकेषां नैकेषां यथा बिल्वादो लम्बचूडक इति । बिल्वं भरणाद्वा भेदनाद्वा ॥७॥१४॥**

---

कमक्षरमेति स्वर्गं लोकं य एवं वेद ( श० ब्रा० १४, ८, ४, १ )—इति।

(क) एवं हरतेर्ददातेरेतेर्हृदयशब्दः। तदर्थफलोपदर्शनार्थं ब्राह्मणेनैवं निरुक्तः। तच्च नः परं प्रमाणम्। तस्माच्छाकटायनस्तदनुदृश्य सम्यगेव कृतवान्—यदनेकैर्धातुभिरेकमभिधानं निरुक्तवानिति ॥१॥१४॥६॥

**यथो एतत्** यत् पुनरेतदुक्तम्—**अपरास्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यत इति।** अत्र ब्रूमः—पश्यामः **पूर्वोत्पन्नानां सत्त्वानामपरस्माद् भावान्नामधेयप्रतिलम्भम्।** अपरस्माद् अपरकालीनादपि सतो भावात्, **एकेषाम्। न एकेषाम्।** तत् **यथा-बिल्वादो लम्बचूडक इति।** पश्चात्कालीनयापि चूडालम्बनक्रियया भविष्यता योगेन बिल्वादनक्रियया च, पूर्वोत्पन्नस्य सत्त्वस्य नामधेयप्रतिलम्भ उपपद्यमानो दृष्टः क्व चान्यत्र नोपपद्यते। तत्र यदुक्तम्-अपरस्माद्भावात् पूर्वस्य प्रदेशो नोपपद्यते इति। एतदनेकान्तिकत्वादयुक्तम्। उपपद्यत एव हि केषाञ्चिदिति।

"**बिल्वं भरणाद्वा भेदनाद्वा**"। भृतं हि तद् भवति बीजानाम्, बिभर्त्ति वा दुर्भिक्षादौ भक्ष्यमाणं जनम्। भेदनाद्वा भिद्यते हि तदवश्यं भक्षणायेति।

आह—किमिदमतिबहिव किमपि पूर्वोत्तरपक्षसम्बद्ध नामाख्यातजत्वमधिकृत्योक्तमिति? उच्यते—शिष्यबुद्धिवृध्यर्थमेतदुक्तम्, कथं नाम व्युत्पन्नबुद्धिः शिष्योऽप्रतिबुध्यमानः सर्वतो मुखानेव लौकिकवैदिकाञ्छब्दान्निर्ब्रूयादिति। सर्वाण्येव हि व्याकरणानि निरुक्तानि च वेदाङ्गत्वाविशेषात् प्रमाणानि' तेषामेव फलमिदं क्वचिदसाध्वित्येतदशक्यं वक्तुमिति ॥१॥१४॥७॥

इति दुर्गाचार्यकृतायां निरुक्तव्याख्यायां
चतुर्दशः खण्डः।

# शब्दानुशासनम् ।

## ( पातञ्जलमहाभाष्यम् )

### ( १ अध्याय, १ पाद, १ आह्निक )

कानि पुनः शब्दानुशासनस्य प्रयोजनानि ? रक्षोहागमलध्वसन्देहाः प्रयोजनम् ।

रक्षार्थं वेदानामध्येयं व्याकरणम् । लोपागमवर्णविकारज्ञो हि सम्यग्वेदान् परिपालयिष्यतीति ।

ऊहः खल्वपि—न सर्वैर्लिङ्गैर्न सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः । ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः, तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम् । तस्मादध्येयं व्याकरणम् ।

---

**कानि पुनरिति'** ।किं संध्योपासनादिवद्याकरणध्ययनं नित्यं कर्माथ काम्यमिति प्रश्नः ।

पारम्पर्येण पुरुषार्थसाधनतामस्याह—**रक्षेति** । लोके लोपाद्यदृष्टं वेदे दृष्ट्वा भ्राम्येदवैयाकरणः, वैयाकरणस्तु न भ्राम्यति वेदार्थं चाध्यवस्यति । तत्र **लोपागमयोरुदाहरणं देवा अदुह्रेति** । दुहेर्लङो झस्यादादेशे कृते **लोपस्त आत्मनेपदेष्विति** तलोपः, **बहुलं छन्दसीति** रुटि सति रूपमेतत् । **वर्णविकारो** यथा—**उद्ग्राभं च निग्राभं** चेति । **हृग्रहोर्भश्छन्दसि हस्येति वक्तव्य-**

आगमः खल्वपि—"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति। प्रधानं च षट्स्वङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति।

लघ्वर्थं चाध्येयं व्याकरणम्। ब्राह्मणेनावश्यं शब्दा ज्ञेयाः इति। न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या ज्ञातुम्।

असन्देहार्थं चाध्येयं व्याकरणम्। याज्ञिकाः पठन्ति 'स्थूलपृषतीमाग्निवारुणीमानड्वाहीमालभेत' इति। तस्यां सन्देहः—स्थूला चासौ पृषती च स्थूलपृषती, स्थूलानि पृषन्ति यस्याः सेयं स्थूलपृषतीति तांनावैयाकरणः स्वरतोऽध्यवस्यतियदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इति।

---

मिति हस्य भकारः। उदि-ग्रह इत्यतोद्ग्राभनिग्राभौ चच्छन्दसि स्रुगुद्यमननिपातनयोरिति वचनादुत्पूर्वाद्ग्रहेर्घञ्। ऊहः खल्वपीति। इह यस्मिन्यागे इतिकर्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते सा प्रकृतिः। येनोपजीव्यते सा विकृतिः। प्रकृतिवद्विकृतिः कर्त्तव्येतिमीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणः सम्यग्विजानाति' तत्राग्नेर्मन्त्रोऽस्ति—अग्नये त्वा जुष्टं निर्वपामीति' तत्र 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति सौर्ये चरौ मन्त्र ऊह्यते—सूर्याय त्वा जुष्टं निर्वपामीति' विस्तरेण भर्तृहरिणा प्रदर्शितः ऊहः।

आगम इति। आगमः प्रयोजनः प्रवर्त्तको नित्यकर्मतां व्याकरणाध्ययनस्य दर्शयति। प्रयोजनशब्देन च फलं प्रयोजकश्चोच्यते। निष्कारण इति। दृष्टं कारणमपेक्ष्येत्यर्थः। प्रधानं चेति। पदपदार्थावगमस्य व्याकरणनिमित्तत्वात्तन्मूलत्वाद्वाक्यवाक्यार्थावसायस्येति भावः।

लघ्वर्थमिति। लाघवेन शब्दज्ञानमस्य प्रयोजनम्। ब्राह्मणेनेति। अध्यापनं ब्राह्मणस्य वृत्तिः। नचाशब्दज्ञं तमुपश्लिष्यन्ति शिष्या इति।

असन्देहार्थमिति। सन्देहस्य प्रागभावोऽत्र द्रष्टव्यो न तु प्रध्वंसाभावः। न हि वैयाकरणस्य संशय उत्पद्य विनश्यति, इतरस्यैव तदुत्पादात्। स्वरत इति। पूर्वपदप्रकृतिस्वराद्बहुव्रीह्यर्थावसाय इत्यर्थः।

किं पुनरिदं व्याकरणमेवाधिजिगांसमानेभ्यः प्रयोजनमन्वाख्यायते, न पुनरन्यदपि किञ्चित् ॐ इत्युक्त्वा वृत्तान्तशः शमित्येवमादीन् शब्दान् पठन्ति ?

पुराकल्प एतदासीत्संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते । तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानज्ञेभ्यो वैदिकाः शब्दा उपदिश्यन्ते । तदद्यत्वे न तथा । वेदमधीत्य त्वरिता वक्तारो भवन्ति वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः ।

अनर्थकं व्याकरणमिति । तेभ्य एवं विप्रतिपन्नबुद्धिभ्योऽध्येतृभ्यः सुहृदभूत्वा आचार्य इदं शास्त्रमन्वाचष्टे—इमानि प्रयोजनान्यध्येयं व्याकरणमिति ।

---

**किं पुनरिति** । ननु **कानि पुनरस्येति** येन पृष्टं, स एव कथं पृच्छति—**किं पुनरिति** । एवं तर्हि भाष्यकारः प्रयोजनान्वाख्यानस्य विषयविभागं दर्शयति । पुरा वेदाध्ययनात्पूर्वं व्याकरणमधीयते ते व्याख्यातप्रष्टुमसमर्था इति न प्रयोजनमन्वाख्येयम् । अद्यत्वे तु स्वल्पायुष्ट्वात्पूर्वमेव वेदं प्रधानमधीयते ततः प्रष्टुं समर्थत्वाद्व्याकरणाध्ययनस्य प्रयोजनं पृच्छन्तीत्यवश्यान्वाख्येयं प्रयोजनम्, **न पुनरन्यदिति** वेदमप्यधिजिगांसमानेभ्य इत्यर्थः । **ॐ मित्युक्त्वेति** । अभ्युगम्येत्यर्थः । **वृत्तान्तश इति** । वृत्तान्तः प्रपाठक उच्यते । वृत्तान्तं वृत्तान्तं पठन्तीत्यर्थः ।

**पुराकल्प इति** । युगान्तरे इत्यर्थः । **संस्कार** उपनयनम् । **करणमा**भ्यन्तरप्रयत्नः । **अनुप्रदानं** नादादिबाह्यप्रयत्नः । तेनाधीतव्याकरणशिक्षेभ्य इत्यर्थः । ते तदानीमपि कर्मानुष्ठानफलकत्वं वेदस्य जानन्तो नित्यत्वं वा तदध्ययनस्य जानन्तो न तदध्ययनप्रयोजनं पृच्छन्तीति न कदाचिदपि वेदाध्ययनप्रयोजनोपदेश इति तात्पर्यम् । **न तथेति** । किंतु विपरीतमित्यर्थः ।

**आचार्यपदेन** शास्त्राध्यापको भाष्यकृदेव विवक्षितः **इदं शास्त्रमिति** । प्रयोजनान्वाख्यानमित्यर्थः ।

**उभयोपदेश इति** । हेयोपादेयोपदेशे स्पष्टा प्रतिपत्तिर्भवतीत्युभयोपदेश उपाश्रितः ।

शब्दानुशासनमिदानीं कर्त्तव्यम् तत्कथं कर्तव्यम् ? किंशब्दोपदेशः कर्त्तव्यः आहोस्विदपशब्दोपदेशः आहोस्विदुभयोपदेश इति।

अन्यतरोपदेशेन कृतं स्यात्। तद्यथा भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते। 'पञ्च पञ्चनखा भक्ष्याः इत्युक्ते गम्यत एतद्—अतोऽन्येऽभक्ष्या इति अभक्ष्यप्रतिषेधेन वा भक्ष्यनियमः। तद्यथा 'अभक्ष्यो ग्राम्यकुक्कुटः, अभक्ष्यो ग्राम्यसूकरः इत्युक्ते गम्यत एतद्—आरण्यो भक्ष्य इति।

एवमिहापि। यदि तावच्छब्दोपदेशः क्रियते गौरित्येतस्मिन्नुपदिष्टे गम्यत एतद्—गाव्यादयोऽपशब्दा इति अथाप्यपशब्दोपदेशः क्रियते गाव्यादिषूपदिष्टेषु गम्यत एतद्—गौरित्येष शब्द इति।

किं पुनरत्र ज्यायः ?

लघुत्वाच्छब्दोपदेशः। गरीयानपशब्दोपदेशः। एकैकस्य शब्दस्य बहवोऽपभ्रंशाः। तद्यथा गौरित्यस्य शब्दस्य 'गावी' 'गोणी' 'गोता' 'गोपोतलिका' इत्येवमादयोऽपभ्रंशाः। इष्टान्वाख्यानं खल्वपि भवति।

---

यद्यपि प्रतिपत्तिः स्पष्टा गौरवं तु भवतीत्याह **अन्यतरेति**। शब्दापशब्दयोरित्यर्थः। अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुविषये निर्धारणे वर्तेते। **पञ्चेति**। अर्थित्वाद्भक्षणं प्राप्तं पञ्चसु पञ्चनखेषु नियम्यमानं सामर्थ्यादन्येभ्यो निवर्तते। न त्वयं विधिः अप्राप्तेरभावात्।

**किं पुनरिति**। उभयोपदेशाद् गुरोर्द्वावपि प्रशस्यौ तयोः को ज्यायानित्यर्थः।

**इष्टेति**। साधुशब्दप्रयोगाद्धर्मावाप्तेरित्यर्थः। अथवा उपादेयोपदेशात्साक्षात्प्रतिपत्तिर्भवतीति भावः।

भाष्ये प्रतिपत्तिविलम्बस्यापायभूत इति शेषः।

**बृहस्पतिरिन्द्रायेति**। प्रतिपदपाठस्याशक्यत्वं प्रतिपादयितुमयमर्थवाद शब्दानामिति। शब्दपारायणशब्दो योगरूढः शास्त्रविशेषस्य, तत्र प्रतिपदोक्तानामिति विशेषणाभिधानाय गम्यमानार्थस्यापि शब्दानामित्यस्य प्रयोगः। एकदेशोपयोगादपि लोके उपयुक्तमित्युच्यते यथौषधसंस्कृतघृतमात्रैकदेशोपयोगे

अथैतस्मिञ्छब्दोपदेशे सति किं शब्दानां प्रतिपत्तौ प्रतिपदपाठः कर्त्तव्यः ? गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इत्येवमादयः शब्दाः पठितव्याः ?

नेत्याह। अनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः। एवं हि श्रूयते—'बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम। बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालो न चान्तं जगाम, किं पुनरद्यत्वे ? यः सर्वथा चिरं जीवति वर्षशतं जीवति। चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति आगमकालेन, स्वाध्यायकालेन प्रवचनकालेन, व्यवहारकालेनेति। तत्र चास्यागमकालेनैवायुः कृत्स्नं पर्युपयुक्तं स्यात्। तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठः।

कथं तर्हीमे शब्दाः प्रतिपत्तव्याः ? किंचित्सामान्यविशेषवल्लक्षणं प्रवर्त्यम्। येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन्।

किं पुनस्तत् ? उत्सर्गापवादौ। कश्चिदुत्सर्गः कर्त्तव्यः कश्चिदपवादः।

कथंजातीयकः पुनरुत्सर्गः कर्त्तव्यः कथंजातीयकोऽपवादः। सामान्येनोत्सर्गः कर्तव्यः। तद्यथा—'कर्मण्यण्' तस्य विशेषेणापवादः। तद्यथा—'आतोऽनुपसर्गे कः।

---

उपयुक्तं धृतामिति व्यवहारः। तदेव नेति प्रतिपादयति **चतुर्भिरिति**। **आगमकालो** ग्रहणकालः। **स्वाध्यायकालो**ऽभ्यासकालः। **प्रवचनकालो**ऽध्यापनकालः **व्यवहारो** याज्ञे कर्माणि।

**किञ्चिदिति**। सामान्यविशेषौ यस्मिंस्तत्सामान्यविशेषवत्‌ **कर्मण्यण्**। **आतोऽनुपसर्गे क** इत्यादि।

भाष्ये **कथंजातीयक इति**। केन प्रकारेणेत्यर्थः। एतेनैवंजातीयकेन शास्त्रेण सुशब्दोपदेशप्रवृत्तिः पाणिनेरुचितेति सूचितम्।

कैयटविरचितप्रदीपात् नागेशभट्टविरचिताद् उद्योताच्च
महाभाष्यव्याख्यानमुद्धृतम्

# जनपदनिवेशः ।

( कौटलीयमर्थशास्त्रम् )

अधि० २ अध्याय १

**भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत् ॥ १ ॥**

**शूद्रकर्षकप्रायं कुलशतावरं पञ्चशतकुलपरं ग्रामं क्रोशद्विक्रोशसीमानमन्योन्यारक्षं निवेशयेत् ॥ २ ॥**

---

**जनपदनिवेश** इति । जनश्चतुर्वर्णाश्रमजातिलक्षणः, पदं तस्य स्थानं 'स्थानीय-द्रोणमुख-कार्वटिकसंग्रहण-ग्रामादिकं,' तस्य निवेशः रचनाताभिधीय॰ इति सूत्रार्थः ।

**भूतेत्यादि** । भूतपूर्वं स्थितम्, पूर्वं स्थितम्, अभूतपूर्वम् अभिनवं वा, जनपदं, परदेशापवाहनेन परदेशाज्जनानयनेन, स्वदेशाभिष्यन्दवमनेन वा अभिष्यन्दोऽतिवृद्धिः वमनमाहरणं स्वदेशे जनानामतिवर्धनादाधारापर्याप्तिदोषादन्यत्राहरणेन वा निवेशयेद् रचयेत् ।

**शूद्रेत्यादि** । ग्रामं शूद्रकर्षकप्रायं शूद्रकृषीवलबहुलं, कुलशतावरं गृहशतान्यूनं, पञ्चशतकुलपरं पञ्चशतानधिकगृहयुक्तं, क्रोशद्विक्रोशसीमानं क्रोशसीमानं द्विक्रोशसीमानं वा एकस्माद् ग्रामाद् ग्रामान्तरस्य क्रोशदूरव्यवधानं, क्रोशद्वयव्यवधानं वा यथा भवेत् तथा क्लृप्तमित्यर्थः, अन्योन्यमारक्षतीत्यन्योन्यारक्षं परस्परसाहाय्यकरणक्षमं निवेशयेत् ।

नदीशैलवनगृष्टिदरीसेतुबन्धशाल्मलीशमीक्षीरवृक्षानन्तेषु सीम्नां स्थापयेत् ॥ ३ ॥ अष्टशतग्राम्या मध्ये स्थानीयं, चतुश्शतग्राम्या द्रोणमुखं, द्विशतग्राम्याः खार्वटिकं[1], दशग्रामीसङ्ग्रहेण सङ्ग्रहणं स्थापयेत् ॥ ४ ॥

अन्तेष्वन्तपालदुर्गाणि ॥५॥ जनपदद्वाराण्यन्तपालाधिष्ठितानि स्थापयेत् ॥ ६ ॥ तेषामन्तराणि वागुरिकशबरपुलिन्दचण्डालारण्यचरा रक्षेयुः ॥ ७ ॥

ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यो ब्रह्मदेयान्यदण्डकराण्यभिरूपदायकानि प्रयच्छेत् ॥ ८ ॥ अध्यक्षसङ्ख्यायकादिभ्यो गोपस्थानिकानीकस्थाचिकित्सकाश्वदमकजङ्घाकारिकेभ्यश्च विक्रयाधानवर्जम् ॥ ९ ॥

करदेभ्यः कृतक्षेत्राण्यैकपुरुषिकाणि प्रयच्छेत् ॥ १० ॥ अकृतानि कर्त्तृभ्यो नादेयात् ॥ ११ ॥

---

नदीत्यादि । सीम्नाम् अन्तेषु, नदीं, शैलः शिलाकूटः, वनं, गृष्टिर्बदरा नामोषधिर्वृक्षविशेषो वा, दरीश्वभ्रम् ।

सेतुबन्धः, शाल्मली स्थिरायुराख्यो वृक्षः, शमी सक्तुफला, क्षीरवृक्षः वटादिरित्येतान् स्थापयेत् सीमरक्षार्थम् ।

अष्टशतेत्यादि । अष्टशतग्राम्याः अष्टशतानां ग्रामाणां समूहस्य, मध्ये, स्थानीयं तदाख्यं तावद्ग्रामजनतायाः,क्रयविक्रयादिकर्मणोपजीव्यं रमणीयं महाग्रामं, स्थापयेत् निवेशयेत्, चतुश्शतग्राम्याः मध्ये, द्रोणमुखं तदाख्यं स्थानीयप्रत्यवरं ग्रामभेदं स्थापयेत , द्विशतग्राम्या मध्ये कार्वटिकं तदाख्य कर्वटापरपर्यायं द्रोणमुख— प्रत्यवरं स्थापयेत् , दशग्रामीसंग्रहेण ग्रामदशकसंग्रहणेन, संग्रहणं तदाख्यं कर्वटादधमं महाद्ग्रामापरपर्यायं स्थापयेत् ।

अन्तेष्विति । अन्तेषु जनपदावसानेषु, अन्तपालदुर्गाणि, अन्तपालाधिष्ठितानि अन्तपालैरनुष्ठिताध्यक्षाणि । जनपदद्वाराणि, जनपदप्रवेशमार्गभूतानि च स्थापयेत् । तेषाम् अन्तराणि अन्तपालदुर्गाणामन्तरालदेशान्,वागुरिकशबरपुलिन्दचण्डालारण्यचराः वागुरिकाः मृगबन्धजीविनः शबराः शूद्राद् भिल्ल्यां जाताः पुलिन्दाः निषादात् किरात्यां जाताः चण्डालाः श्मशानपालाः अरण्यचराः वनचारिणश्च, रक्षेयुः ।

ऋत्विगित्यादि । ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यः याजकाध्यापकपुरोधःशूछान्दसेभ्यः, अदण्डकराणि दण्डो नाम द्विःकृषिकृकृतौ त्रिःकृष्यनुष्ठानादिनिमित्तः कुल्यादिजलात्युपयागादिनिमित्तो वा दमः करः कृषिफलषष्ठांशः तदुभयरहितानि,

---

1. कार्वाटिकम् ।

अकृषतामाच्छिद्यान्येभ्यः प्रयच्छेत् ॥ १२ ॥ ग्रामभृतकवैदेहका वा कृषेयुः ॥ १३ ॥ अकृषन्तोऽवहीनं दद्युः ॥ १४ ॥ धान्यपशुहिरण्यैश्चैनाननुगृह्णीयात् । तान्यनु सुखेन दद्युः ॥ १५ ॥

अनुग्रहपरिहारौ चैभ्यः कोशवृद्धिकरौ दद्यात् ॥ १६ ॥ कोशोपघातिकौ वर्जयेत् ॥ १७ ॥ अल्पकोशो हि राजा पौरजानपदानेव ग्रसते । ॥ १८ ॥ निवेशसमकालं यथागतकं वा परिहारं दद्यात् ॥ १९ ॥ निवृत्तपरिहारान् पितेवानुगृह्णीयात् ॥ २० ॥

आकरकर्मान्तद्रव्यहस्तिवनव्रजवणिक्पथप्रचारान् वारिस्थलपथपण्यपत्तनानि च निवेशयेत् ॥ २१ ॥

---

अभिरूपदायकानि अभिरूपेभ्यः अर्हेभ्यः पुत्रादिभ्यो दायः दानं येषां तानि तथाभूतानि वंशपारम्पर्यभोग्यानीत्यर्थः यथेच्छविनियोगयोग्यानीति वा, ब्रह्मदेयानि ब्राह्मणेभ्यो देयानि अर्थात् क्षेत्राणि, प्रयच्छेत् दद्यात् ।

**अध्येक्षतादि** । विक्रयाधानवर्जं मूल्यमादाय दानं विक्रयः आधिकरणमाधानं तदुभयाधिकारवर्जं केवलोपभोगायेत्यर्थः, अध्यक्षसंख्यायकादिभ्यः अध्यक्षाः सुवर्णाध्यक्षादयः संख्यायकाः गणकाः तत्प्रभृतिभ्यः, गोपस्थानिकानीकस्थचिकित्सकाश्वदमकजङ्घाकारिकेभ्यश्च गोपः दशग्रामीपञ्चग्राम्याद्यधिकारी स्थानिको नगरचतुर्भागाधिकारी अनीकस्थः हस्तिशिक्षाविचक्षणः चिकित्सको वैद्यः अश्वदमकः अश्वशिक्षाभिज्ञः जङ्घाकारिकः जाङ्घिकोदूरदेशगतागतजीवी एतेभ्यश्च, क्षेत्रं प्रयच्छेदितिसामर्थ्यलभ्यम् ।

**करदेभ्य इति** । करदेभ्यः राजभागदायिभ्यः, कृतक्षेत्राणि कृतानि क्षेत्राणि पूर्वसिद्धसौष्ठवान् व्रैहेयशालेयादीन् केदारान्, ऐकपुरुषिकाणि एकेनैव ग्रहीतृपुरुषेण भोग्यानि प्रयच्छेत् । अकृतानि साध्यसौष्ठवानि अर्थात् क्षेत्राणि, कर्तृभ्यो नादेयात् सौष्ठवसाधकेभ्यः करदेभ्योनगृह्णीयात्, सर्वाविधिस्वाम्येन तेष्वेव स्थापयेदित्यर्थः । इह आदेयादित्यात्मनेपदाकरणम् आर्षम् ।

**अकृषतामिति** । अकृषतां कृषिमकुर्वतां । क्षेत्राणीति शेषः, आच्छिद्य हृत्वा, अन्येभ्यः प्रयच्छेत् । तदभावे ग्रामभृतकवैदेहकाः ग्रामाधिकारिणो वणिजश्च, कृषेयुः । अकृषन्तः अभ्युपेत्य कृषिमकुर्वतः, अवहीनं नष्टं, दद्युः । अनुपायाच्चेदकर्षणं तदा कथमित्याह—धान्यपशुहिरण्यैश्च कृष्यनुष्ठानापेक्षितैः, एनान् अभ्युपत-

**सहोदकमाहार्योदकं वा सेतुं बन्धयेत् ॥ २२ ॥ अन्येषां वा बध्नतां भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात् ॥ २३ ॥ पुण्यस्थानारामाणां च ॥ २४ ॥ सम्भूयसेतुबन्धादपक्रामतः कर्मकरबलीवर्दाः कर्म कुर्युः ॥ २५ ॥ व्ययकर्मणि च भागी स्यात् ॥ २६ ॥ न चांशं लभेत ॥ २७ ॥**

---

कृषीन् अनुगृह्णीयात् अनु पश्चात् कृषिफलप्राप्त्यनन्तरं, तानि, धान्यादीनि सुखेन आत्मवृत्त्यपीडया दद्युः कर्षका राज्ञे।

**अनुग्रहेत्यादि**। एभ्यः कृषिकर्तृभ्यः अनुग्रहपरिहारौ च स्वस्थवृद्ध्यर्थं दीयमानं द्रव्यमनुग्रहः दौस्थ्यपरिहारेण स्वास्थ्यसिद्ध्यर्थं दीयमानं द्रव्यं परिहारः कोशवृद्धिकरौ दद्यात् आत्मकोशवर्धनं यथा पर्यवस्येतां तथा दद्यात्। कोशोपघातिकौ कोशक्षयकरौ अनुग्रहपरिहारौ, वर्जयेत्। कुतः, हि यतः अल्पकोशः राजा पौरजानपदानेव, ग्रसते पीडयति, स्वकोशपूरणार्थम्।

**निवेशेत्यादि**। निवेशसमकालं परिहारं निवेशः इदम्प्रथमकुलस्यापनं तत्तुल्यकालं परिहारं तत्काले कृतो यः स्वास्थ्यसिद्ध्यर्थः उपकारस्तमित्यर्थः, दद्यात्। यथागतकं वा दद्यात् आगताननतिक्रमेण च दद्यात् नवनवागतकुलेभ्योऽपि दद्यादित्यर्थः। निवृत्त्यादि। निवृत्तपरिहारान् प्रत्यर्पितपरिहारद्रव्यान् पितेव, अनुगृह्णीयाद् वृद्ध्यर्थमनुग्रहद्रव्यं दत्त्वोपकुर्यात्।

**आकरेत्यादि**। आकरकर्मान्तद्रव्यहस्तिवनव्रजवणिक्पथप्रचारान् आकरव्यापारस्थानं द्रव्यवनं दारुचन्दननिर्यासाद्युपकरणप्रसवक्षमं वनं हस्तिवनं गजवनं व्रजप्रचारः गोऽध्यक्षवक्ष्यमाणः वणिक्पथप्रचारः वणिक्पथव्यापारः एतान्, वारिस्थलपथपण्यपत्तनानि च जलपथस्थलपथपण्यक्रयविक्रयस्थानानि च निवेशयेत् कारयेत्। पत्तनम् क्रयविक्रयस्थानम् नावैकगम्यपुरम् वा पण्यपत्तनं पण्यप्रधानं नौमात्रगम्यं पुरम्। पट्टनशब्दपाठे पण्यपट्टनं पण्यप्रधानं पट्टनं शकटैरश्वैर्नौभिश्च गम्यं पुरमित्यर्थः, 'पट्टनं शकटैर्गम्यं घोटकैर्नौभिरेव च' इति यादवाभिधानात्।

**सहोदकमिति**। सहोदकं नित्यप्रवृत्तोदकं नद्यादौ, सेतुं वारणं बन्धयेत् कुल्यादिद्वारेण कृष्याद्यर्थम् आहार्योदकं नद्यादितो वर्षासु तुङ्गस्थलेभ्यश्च समानेयजलं सेतुं वा बन्धयेत्। बध्नतां सेतुं रचयताम्, अन्येषां वा जनानां च, भूमिमार्ग-

मत्स्यप्लवहरितपण्यानां सेतुषु राजा स्वाम्यं गच्छेत् ॥२८॥ दासाहितकबन्धूननशृण्वतो राजा विनयं ग्राहयेत् ॥२९॥ बालवृद्धव्याधितव्यसन्यनाथांश्च राजा बिभृयात् ॥३०॥ स्त्रियमप्रजातां प्रजातायाश्च पुत्रान् ॥३१॥ बालद्रव्यं ग्रामवृद्धा वर्जयेयुराव्यवहारप्रापणात् देवद्रव्यं च ॥३३॥

अपत्यदारान् मातापितरौ भ्रातॄनप्राप्तव्यवहारान् भगिनीः कन्या विधवाश्चाबिभ्रतः शक्तिमतो द्वादशपणो दण्डोऽन्यत्र पतितेभ्यः ॥३४॥ अन्यत्र मातुः ॥३५॥

---

वृक्षोपकरणानुग्रहं कुर्यात् भूमिः प्रभूतजलावरोधयोग्यं स्थलं मार्गः जलप्रवेशनिर्गमसरणिः वृक्षोपकरणं सारदावादिकम् एतैरनुग्रहम् एतद्दानोपकारं कुर्यात् । पुण्यस्थानारामाणांच निर्मीयमाणानां विषये, भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात् ।

**सम्भूयेत्यादि** । सम्भूयसेतुबन्धाद् जनैः सङ्घभूय क्रियमाणात् सेतुबन्धाद्, अपक्रामतः अपसरतः अनिच्छया स्वीयं कर्मांशमकुर्वतो जनस्य, कर्मकरबलीवर्दाः भृत्याःउक्षाणश्च, कर्म कुर्युः—राजा बलात् तैः कर्म कारयेदित्यभिप्रायः । अपक्रामतोऽन्यमपि दण्डमाह-व्ययकर्मणीति । व्ययकर्मणि च भागी अंशभाक्स्यात् अंशं च न लभेत अर्थात् सेतुबन्धानन्तरभवे तत्फले ।

**मत्स्येत्यादि** । सेतुषु, उत्पद्यमानानामितिशेषः, मत्स्यप्लवहरितपण्यानां मत्स्याः प्रसिद्धाः प्लवाः कारण्डवाः जलजलजविहारिणः हरितानि पद्मोत्पलकशेरुकादीनि एषां पण्यवस्तूनां, स्वाम्यं स्वामित्वं, राजा गच्छेत् , ननु सम्भूयसेतुकारिणोऽपि । **दासेत्यादि** । अननुशृण्वतः स्वरक्षकनिदेशावधीरिणः, दासाहितकबन्धून दासान् गर्भदास-गृहजात-क्रीत-लब्ध-दायोपगतादीन् आहितकान् स्वामिना धनग्रहणेनाधितां नीतान् बन्धून् पुत्रादींश्च राजा, विनयं प्रणतिं, ग्राहयेत् । बालवृद्धव्याधितव्यसन्यनाथांश्च अनाथा ये बालादयः तांश्च, बिभृयात् पोषयेत् । अप्रजातां वन्ध्यां स्त्रियं प्रजाताया पुत्रांश्च बिभृयात् सा च ते च यद्यनाथा इत्यर्थम् ।

**बालेत्यादि** । बालद्रव्यं बालस्य अप्राप्तव्यवहारस्य नाथहीनस्य, द्रव्यं ग्रामवृद्धाः वर्जयेयुः नोपयुञ्जीरन् तथैव स्थापयेयुर्वर्धनार्हंचेद् वर्धयेयुश्चेत्यभिप्रायः कियन्तं कालम् आव्यहारप्रापणात् व्यवहारप्राप्तिकालं यावत् । देवद्रव्यं च देवालयद्रव्यं च, ग्रामवृद्धा वर्जयेयुः अवधेरयोगादित्यम् ।

**सहोदकमाहार्योदकं वा सेतुं बन्धयेत् ॥ २२ ॥ अन्येषां वा बध्नतां भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात् ॥ २३ ॥ पुण्यस्थानारामाणां च ॥ २४ ॥ सम्भूयसेतुबन्धादपक्रामतः कर्मकरबलीवर्दाः कर्म कुर्युः ॥ २५ ॥ व्ययकर्मणि च भागी स्याद् ॥ २६ ॥ न चांशं लभेत ॥ २७ ॥**

---

कृषीन् अनुगृह्णीयात् अनु पश्चात् कृषिफलप्राप्त्यनन्तरं, तानि, धान्यादीनि सुखेन आत्मवृत्त्यपीडया दद्युः कर्षका राज्ञे ।

**अनुग्रहेत्यादि** । एभ्यः कृषिकर्तृभ्यः अनुग्रहपरिहारौ च स्वस्थवृध्यर्थं दीयमानं द्रव्यमनुग्रहः दौस्थ्यपरिहारेण स्वास्थ्यसिध्यर्थं दीयमानं द्रव्यं परिहारः कोशवृद्धिकरौ दद्यात् आत्मकोशवर्धने यथा पर्यवस्येतां तथा दद्यात् । कोशोपघातिकौ कोशक्षयफलौ अनुग्रहपरिहारौ, वर्जयेत् । कुतः, हि यतः अल्पकोशः राजा पौरजानपदानेव, ग्रसते पीडयति, स्वकोशपूरणार्थम् ।

**निवेशेत्यादि** । निवेशसमकालं परिहारं निवेशः इदम्प्रथमकुलस्यापनं तत्तुल्यकालं परिहारं तत्काले कृतो यः स्वास्थ्यसिद्ध्यर्थः उपकारस्तमित्यर्थः, दद्यात् । यथागतकं वा दद्यात् आगतानतिक्रमेण च दद्यात् नवनवागतकुलेभ्योऽपि दद्यादित्यर्थः । निवृत्यादि । निवृत्तपरिहारान् प्रत्यर्पितपरिहारद्रव्यान् पितेव, अनुगृह्णीयाद् वृद्ध्यर्थमनुग्रहद्रव्यं दत्त्वोपकुर्यात् ।

**आकरेत्यादि** । आकरकर्मान्तद्रव्यहस्तिवनव्रजवणिक्पथप्रचारान् आकरव्यापारस्थानं द्रव्यवनं दारुचन्दननिर्यासाद्युपकरणप्रसवक्षमं वनं हस्तिवनं गजवनं व्रजप्रचारः गोध्यक्षवक्ष्यमाणः वणिक्पथप्रचारः वणिक्पथव्यापारः एतान्, वारिस्थलपथपण्यपत्तनानि च जलपथस्थलपथपण्यक्रयविक्रयस्थानानि च निवेशयेत् कारयेत् । पत्तनम् क्रयविक्रयस्थानम् नावेकगम्यपुरम् वा पण्यपत्तनं पण्यप्रधानं नौमात्रगम्यं पुरम् । पट्टनशब्दपाठे पण्यपट्टनं पण्यप्रधानं पट्टनं शकटैरश्वैर्नौभिश्च गम्यं पुरमित्यर्थः, 'पट्टनं शकटैर्गम्यं घोटकैर्नौभिरेव च' इति यादवाभिधानात् ।

**सहोदकमिति** । सहोदकं नित्यप्रवृत्तोदकं नद्यादौ, सेतुं वारणं बन्धयेत् कुल्यादिद्वारेण कृष्याद्यर्थम् आहार्योदकं नद्यादितो वर्षासु तुङ्गस्थलेभ्यश्च समानेयजलं सेतुं वा बन्धयेत् । बध्नतां सेतुं रचयताम्, अन्येषां वा जनानां च, भूमिमार्ग-

मत्स्यप्लवहरितपण्यानां सेतुषु राजा स्वाम्यं गच्छेत् ॥२८॥ दासाहितकबन्धूननशृण्वतो राजा विनयं ग्राहयेत् ॥२९॥ बालवृद्धव्याधितव्यसन्यनाथांश्च राजा बिभृयात् ॥३०॥ स्त्रियमप्रजातां प्रजातायाश्च पुत्रान् ॥३१॥ बालद्रव्यं ग्रामवृद्धा वर्जयेयुराव्यवहारप्रापणात् देवद्रव्यं च ॥३३॥

अपत्यदारान् मातापितरौ भ्रातृनप्राप्तव्यवहारान् भगिनीः कन्या विधवाश्चाबिभ्रतः शक्तिमतो द्वादशपणो दण्डोऽन्यत्र पतितेभ्यः ॥३४॥ अन्यत्र मातुः ॥३५॥

---

वृक्षोपकरणानुग्रहं कुर्यात् भूमिः प्रभूतजलावरोधयोग्यं स्थलं मार्गः जलप्रवेशनिर्गमसरणिः वृक्षोपकरणं सारदावादिकम् एतैरनुग्रहम् एतद्दानोपकारं कुर्यात् । पुण्यस्थानारामाणांच निर्मीयमाणानां विषये, भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात् ।

**सम्भूयेत्यादि** । सम्भूयसेतुबन्धाद् जनैः सङ्घभूय क्रियमाणात् सेतुबन्धाद्, अपक्रामतः अपसरतः अनिच्छया स्वीयं कर्मांशमकुर्वतो जनस्य, कर्मकरबलीवर्दाः भृत्याःउक्षाणश्च, कर्म कुर्युः—राजा बलात् तैः कर्म कारयेदित्यभिप्रायः । अपक्रामतोऽन्यमपि दण्डमाह-व्ययकर्मणीति । व्ययकर्मणि च भागी अंशभाक्स्यात् अंशं च न लभेत अर्थात् सेतुबन्धानन्तरभवे तत्फले ।

**मत्स्येत्यादि** । सेतुषु, उत्पद्यमानानामितिशेषः, मत्स्यप्लवहरितपण्यानां मत्स्याः प्रसिद्धाः प्लवाः कारण्डवाः जलजलजविहारिणः हरितानि पद्मोत्पलकशेरुकादीनि एषां पण्यवस्तूनां, स्वाम्यं स्वामित्वं, राजा गच्छेत्, नतु सम्भूयसेतुकारिणोऽपि । **दासेत्यादि** । अनशृण्वतः स्वरक्षकनिदेशावधीरिणः, दासाहितकबन्धून दासान् गर्भदास-गृहजात-क्रीत-लब्ध-दायोपगतादीन् आहितकान् स्वामिना धनग्रहणेनाधितां नीतान् बन्धून् पुत्रादींश्च राजा, विनयं प्रणतिं, ग्राहयेत् । बालवृद्धव्याधितव्यसन्यनाथांश्च अनाथा ये बालादयः तांश्च, बिभृयात् पोषयेत् । अप्रजातां वन्ध्यां स्त्रियं प्रजाताया पुत्रांश्च बिभृयात् सा च ते च यद्यनाथा इत्यर्थम् ।

**बालेत्यादि** । बालद्रव्यं बालस्य अप्राप्तव्यवहारस्य नाथहीनस्य, द्रव्यं ग्रामवृद्धाः वर्जयेयुः नोपयुञ्जीरन् तथैव स्थापयेयुर्वर्धनार्हंचेद् वर्धयेयुश्चेत्यभिप्रायः कियन्तं कालम् आव्यहारप्रापणात् व्यवहारप्राप्तिकालं यावत् । देवद्रव्यं च देवालयद्रव्यं च, ग्रामवृद्धा वर्जयेयुः अवधेरयोगान्नित्यम् ।

पुत्रादारमप्रतिविधाय प्रव्रजतः पूर्वःसाहसदण्डः ॥ ३६ ॥ स्त्रियं च प्रव्राजयतः ॥ ३७ ॥

वानप्रस्थादन्यः प्रव्रजितभावः, सुजातादन्यः सङ्घः, सामुत्थायकादन्यः समयानुबन्धो वा नास्य जनपदमुपनिविशेत ॥ ३८ ॥

न च तत्रारामा विहारार्थाः शाला स्युः ॥ ३९ ॥ नटनर्तनगायनवादकवाग्जीवनकुशीलवा वा न कर्मविघ्नं कुर्युः ॥४०॥ निराश्रयत्वाद् ग्रामाणां, क्षेत्राभिरतत्वाच्च पुरुषाणां कोशविष्टिद्रव्यधान्यरसवृद्धिर्भवतीति ॥ ४१ ॥

परचक्राटवीग्रस्तं व्याधिदुर्भिक्षपीडितम् ।
देशं परिहरेद् राजा व्ययक्रीडाश्चवारयेत् ॥ ४२ ॥

---

**अपत्येत्यादि** । अपत्यदारान् अपत्यं दारांश्च दारमिति पाठे समाहारद्वन्द्वः अप्राप्तव्यवहारान् भ्रातॄन् बालान् सोदर्यान् । कन्याः भगिनीः विधवा भगिनीश्च शक्तिमतः रक्षणोपायवतः । पतितेभ्योऽन्यत्र पतितव्यतिरेकेण, अपत्यादीनामपतितानामेवारक्षणे दण्डो न तु पतितानाम् । पतितेष्वपि प्रतिप्रसवमाह ।

**अन्यत्र मातुरिति** । माता तु पतितापि रक्षणीयैवेत्यर्थः ।

**पुत्रेत्यादि** । पुत्रदारमप्रतिविधाय प्रव्रजतः पुत्राणां दाराणां च जीवनोपायमदर्शयित्वा सन्न्यस्यतः स्त्रियं प्रव्राजयतश्च प्रव्रजन्तीं प्रयोजयतश्च, पूर्वः साहसदण्डः प्रथमः साहसदण्डः 'पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः' इति मनूक्तलक्षणः कर्तव्यः ।

अथ जनपदवासानर्हानाह—**वानेत्यादि** । वानप्रस्थादन्यः प्रव्रजितभावः वैखानसादतिरिक्तः प्रव्राजितावस्थः, अर्थाच्चतुर्थाश्रमी, अस्य राज्ञो जनपदं नोपनिविशेत नाध्यासीत । प्रतिषेधनिमित्तं तु अभिशङ्कनीयशीलत्वमुक्तप्रायम् । सुजातादन्यः सङ्घः सुष्ठुजातात् राजराज्यक्षेमायोत्पन्नात् जनसङ्घाद् अन्यो दुर्जातः जनसङ्घः, अस्य जनपदं नोपनिविशेत सामुत्थायकादन्यः समयानुबन्धो वा सामुत्थायकाःसम्भूयसेतुबन्धादिराजप्रजानुकूलकर्मकारिणः तेषां सम्बन्धी सामुत्थायकः सामुत्थायकात् समयानुबन्धाद् अन्यः राजजनपदद्रोहफलः समयानुबन्धः सङ्केतरचना च, अस्य जनपदं नोपनिविशेत ।

दण्डविष्टिकराबाधैः रक्षेदुपहतां कृषिम् ।
स्तेनव्यालविषग्राहैर्व्याधिभिश्च पशुव्रजान् ॥ ४३ ॥

बल्लभैः कार्मिकैः स्तेनैरन्तपालैश्च पीडितम् ।
शोधयेत् पशुसङ्घैश्च क्षीयमाणं वणिक्पथम् ॥ ४४ ॥

---

**न चेति** । तत्र जनपदे, आरामाः विहारार्थाः सर्वजनविनोदस्थानान्युपवनानि, शालाश्च प्रेक्षणीयप्रयोगशालाश्च, न स्युः । आरामशालाप्रतिषेधस्य फलमाह—**नटेत्यादि** । नटनर्तनगायनवादकवाग्जीवनकुशीलवा वा, कर्मविघ्नं कृष्याद्यनुष्ठानविघ्नं न कुर्युः, नाट्यनृत्तगानवादनकथावर्णननर्मक्रियासु स्ववृत्तिषु न चेष्टेरन्निति भावः । कस्मात्, ग्रामाणां निराश्रयत्वात् नाट्यादिप्रयोगयोग्यशालारहितत्वात् । एवंच सिद्धं परमफलमाह—**क्षेत्रेत्यादि** । पुरुषाणां क्षेत्राभिरतत्वाद् विनोदस्थानाभावेन स्वस्वकर्मस्थानासक्तत्वात्, कोशविष्टिद्रव्यधान्यरसवृद्धिर्भवति कोशस्य, विष्टेः हठकारयितव्यस्य कर्मणः द्रव्यस्य द्रुमवस्य दावादिपदार्थस्य, धान्यस्य रसस्य तैलेक्षुरसादेश्च वृद्धिः भवति । इति एवम्प्रकारं फलमुन्नेयमित्यर्थः ।

**परचक्रेति** । राजा परचक्राटवीग्रस्तं परचक्रं शत्रुकपटः शत्रुसैन्यं वा अटवी तात्स्थ्यादु अटवीपालः ताभ्यां ग्रस्तं, व्याधिदुर्भिक्षपीडितं देशं परिहरेत् परचक्रादिभ्यो दूरीकुर्यादित्यर्थः । व्ययक्रीडाश्च धनव्ययहेतुभूताः क्रीडाश्च वारयेत् ।

**दण्डविष्टिति** । दण्डविष्टिकराबाधैः दण्डविष्टिकराणामतिरेचननिमित्ताभिः पीडाभिः, उपहतां कृषिं रक्षेत्, युक्तदण्डविष्टिकरो भूत्वेत्यर्थम् । स्तेनव्यालविषग्राहैः व्याधिभिश्च उपहतान् पशुव्रजांश्च रक्षेत् स्तेनादिभिरुपघातो यथा न भवेत् तथा पालयेत् ।

एवं द्रव्यद्विपवनं सेतुबन्धमथाकरान् ।
रक्षेत् पूर्वकृतान् राजा नवांश्चाभिप्रवर्त्तयेत् ॥ ४५ ॥

इति कौटलीयार्थशास्त्रे अध्यक्षप्रचारे द्वितीयाधिकरणे
प्रथमोऽध्यायः जनपदनिवेशः,
आदितो द्वाविंशः ॥

---

**वल्लभैरित्यादि** । वल्लभैः राजदयितैः, कार्मिकैः राजशुल्काधिकृतैः, स्तेनैः, अन्तपालैः, पशुसङ्घैश्च व्याघ्रादिसङ्घैश्च, पीडितम्, अतएव क्षयिमाणं वणिक्प्रचारवेरल्यात्, वणिक्पथं शोधयेत् रक्षेत् वल्लभादिपीडापरिहारद्वारेण ।

**एवमित्यादि** । स्पष्टार्थः श्लोकः ॥

इति कौटलीयार्थशास्त्रव्याख्यायाम् अध्यक्षप्रचारे द्वितीयाधिकरणे
प्रथमोऽध्यायः जनपदनिवेशः,
आदितो द्वाविंशः ॥

---

# जातकमाला

## ब्राह्मणजातकम्

आत्मलज्जयैव सत्पुरुषा नाचारवेलां लङ्घयन्ति । तद्यथाऽनुश्रूयते—बोधिसत्त्वः किल कस्मिंश्चिदनुपक्रुष्टगोत्रचारित्रे स्वधर्मानुवृत्तिप्रकाशयशसि विनयाऽऽचारश्लाघिनि महति ब्राह्मणकुले जन्मपरिग्रहं चकार । स यथाक्रमं गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मादिभिः कृतसंस्कारक्रमो वेदाध्ययननिमित्तं श्रुताभिजनाचारसम्पन्ने गुरौ प्रतिवसति स्म ।

---

### पदचन्द्रिका

जातकमिदं जातकमालायां द्वादशी मुक्ता । जातकमालायां च भगवतस्तथागतस्य तास्ताः सौगतावस्थाप्राप्तितः पूर्वा बोधिसत्त्वावदानरूपा जन्मान्तरप्रवृत्तयो ग्रथिता, याः किल तत्सिध्यधिगमे भगवतः साधनानि समभूवन् । जातकं जन्म । ब्राह्मणस्य जातकं ब्राह्मणजातकम् । इह जन्मवृत्तमभिप्रेतम् । जातकानां वर्णनप्रकारस्त्वित्थम्—आदौ साध्यं वस्तु किमपि प्रस्तूयते, यथा सुपारगजातके—धर्माश्रयं सत्यवचनमप्यापदं नुदति प्रागेव तत्फलम् , इति धर्मानुवर्त्तिना भवितव्यम् इति । अनन्तरं तदेव कयाचिद्बोधिसत्त्वस्य जन्मान्तरकथया सानुमोदं प्रतिपादयितुमुपन्यस्यते । प्रकृते 'आत्मलज्जयैव सत्पुरुषा नाचारवेलां लङ्घयन्तीति' साध्यं तद्यथानुश्रूयत इत्यारभ्य बोधिसत्त्ववृत्तेन निष्पाद्यते । कथान्ते च सिद्धे साध्ये पुनरपि निष्कर्षरूपेण तन्निर्देशः । एवमन्वर्थेयं जातकमाला बोधिसत्त्वावदानमालापराख्या स्पेयरमहोदयस्य मते तु जातकमिदं यज्ञजातकमिव प्रक्षिप्तम् । मूलगाथासु तु नासीदिति च तर्कयति विद्वद्वर्यः ।

**आत्मलज्जयेति** । आत्मनोऽन्तःकरणस्य लज्जया त्रपया—लज्जया प्रतिबन्धरूपया ह्रियेति भावः । सत्पुरुषाः साधवः । आचारस्य सद्वृत्तस्य

तस्य श्रुतग्रहणधारणपाटवं च,
भक्त्यन्वयश्च सततं स्वकुलप्रसिद्धः ।
पूर्वे वयस्यपि शमाभरणा स्थितिश्च,
प्रेमप्रसादसुमुखं गुरुमस्य चक्रुः ॥ १ ॥

---

समुदाचारस्य वेलां मर्यादां परिपाटीमिति यावत् । न लङ्घयन्ति नातिक्रामन्ति । तत्कथमिति ?—तद्यथाऽनुश्रूयत इत्यादिना प्रतिपाद्यम्—अत्र बोधिसत्त्वस्याचारः प्रमाणम् । बोधिसत्त्व इति सम्यक्सम्बुद्धस्य श्रीसुगतस्य बोधात् पूर्वा संज्ञा । अनुपकृष्टेऽनाक्षिप्तेऽनवद्ये गोत्रे वंशश्चारित्रमाचारपद्धतिस्ते यस्य तस्मिन्महति ब्राह्मणकुले 'उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणम्' इति कोषः । अनुपाकृष्टेति पाठान्तरं लभ्यते । स्वस्याऽऽत्मनो यो धर्मः सद्वृत्तं तस्याऽनुवृत्त्याऽनुरोधेन प्रकाशमतिप्रसिद्धं यशः कीर्तिर्यस्य तस्मिन् । विनयः प्रश्रयोः विद्या वा, ऽऽचारो वृत्तं ताभ्यां श्लाघिनि प्रशस्ते । श्लाघाऽस्यास्तीति व्यासाच्छ्लाघि । विनयपदेन सुगतस्य विनायकसंज्ञायाः सार्थता व्यज्यते ।

जन्मपरिग्रहं चकार जन्म जग्राह । क्रममनतिक्रम्य यथाक्रमम् । कृतो विहितः संस्काराणामाभिनयानां क्रमो विधिर्यस्य सः । गर्भाधानादयः संस्कारविशेषाः । आदिशब्देन नामकरणप्रभृतीनां ग्रहणम् । तेषां च सविशेषज्ञानाय धर्मसूत्राणि संस्कारविध्यादयश्च ग्रन्थाः पर्यालोच्याः । दिङ्मात्रं यथा—गर्भाधानं तावत्—गर्भस्याऽऽधानं वीर्यस्थापनं स्थिरीकरणं यस्मिन्येन वा कर्मणा तद्गर्भाधानम् पुंसवनम्-पुरा स्यन्दत इति, मासे द्वितीये तृतीये वा ( पारस्कर० १।१४ ) । सीमन्तस्य केशवेषस्य—सीमन्तवदिति लक्ष्यार्थः—उन्नयनं वृद्धिर्यस्मिन्येन वा कर्मणा तत्सीमन्तोन्नयनम् । अत्र पारस्करः-पुंसवनवत् प्रथमे गर्भे, मासे षष्ठेऽष्टमे वा ( १।१५ ) । जातकर्म जातस्य पुत्रस्य जन्ममुहूर्ते क्रियमाणं कर्म-तदाख्यः संस्कारः । गुरौ प्रतिवसति स्माऽन्तेवासितयोपाध्यायं शुश्रूषते स्म । कीदृशे गुरौ ? श्रुतेन ज्ञानेना, ऽभिजनेन गोत्रेण, ऽऽचारेण वृत्तेन च सम्पन्ने सुभूषिते । अथ श्लोकाभ्यां बोधिसत्त्वस्य शिष्यसद्भावसद्गुणानुपवर्णयति—

**तस्येति** । तस्यैवंविधस्य बोधिसत्त्वस्य विशिष्टा गुणा मन्त्रवद्गुरुं वशं निन्युः के गुणाः ? उदाहरति—श्रुतस्याऽऽधीतस्य यद्ग्रहणमधिगमो यच्च धारणमात्मसात्कारस्तयोः पाटवं नैपुण्यं ( दक्षता ) । भक्तिः प्रवणता, तस्या

वशीकरणमन्त्रा हि नित्यमव्याहता गुणाः ।
अपि द्वेषाग्नितप्तानां किं पुनः स्वस्थचेतसाम् ॥२॥

अथ तस्याध्यापकः सर्वेषामेव शिष्याणां शीलपरीक्षा-निमित्तं स्वाध्यायविश्रामकालेष्वात्मनो दारिद्र्यदुःखान्यभीक्ष्ण-मुपवर्णयामास—

स्वजनेऽपि निराक्रन्दमुत्सवेऽपि हतानन्दम् ।
धिक्प्रदानकथामन्दं दारिद्र्यमफलच्छन्दम् ॥३॥

---

अन्वयः सन्ततिः । शमः सौम्यमाभरणं भूषणं यस्याः सा स्थितिर्धृतिः । पूर्वे वयसि बाल्ये यौवने च । वयःस्थस्तरुणो युवेति कोषः । पूर्वे वयसि वर्त्तमानत्वाच्च 'नवे भाजने लग्नः संस्कारो नाऽन्यथा' ऽभवदिति स्पष्टम् । प्रेम्णा स्नेहेन प्रसादेन ऽनुग्रहेण च सुमुखं विकसिताननं गुरुमुपाध्यायं चक्रुर्विदधुः ॥ १ ॥

वशीकरणेति । अव्याहता अप्रतिहताः । गुणा नैसर्गिकाः स्थित्यादयो लक्ष्यन्ते । नित्यं सर्वदा । वशीकरणमन्त्रा हि गुप्तवादवत्स्वायत्तीकारका एव । गुप्तवादो मन्त्र इत्यमरः । उत्तररामचरिते भवभूतिप्रयुक्तं 'रहस्य' मभिप्रेयते । द्वेषो मात्सर्यादिः स एवाग्निर्वह्निस्तेन तप्तानां क्लिष्टानाम् । स्वस्थं प्रकृतिस्थं चेतो मनो येषां, तेषाम् । गुणाः शत्रूणामपि वशीकरणे समर्था, का कथा पुनरन्येषामिति सरलार्थः । विनयपदेन सुगतस्य विनायकसंज्ञायाः सार्थता व्यज्यते । सुविज्ञातं च—'विद्या ददाति विनयं, विनयाद्याति पात्रताम्' इति । अनेन च बोधविनययोः सततसम्बन्धो गम्यते ॥ २ ॥

अथेति । शीलस्य स्वभावस्य परीक्षानिमित्तमन्वीक्षणनिमित्तम् । स्वाध्यायो वेदादिसच्छास्त्राध्ययनं, तत्र यो विश्रामोऽवकाश, स्तस्य कालेष्ववसरेषु 'यास्को वेदाध्ययनमेव' स्वाध्याय इति लक्षयति । अभीक्ष्णं सततं मुहुर्मुहुरिति यावत् अतः ऊर्ध्वं दारिद्र्यमुपवर्णयति ।

स्वजने इति । दारिद्र्यं दैन्यम् । निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि चेत्यमरः । स्वजने बन्धुवर्गे । निराक्रन्दं निर्गत आक्रन्दोऽनुक्रोशो यस्माद्विगतानुकम्पमिति यावत् । उत्सवे हर्षकाले हतो निरस्त आनन्दः सुखं यस्य तत् । प्रदानस्य सम्प्रदानस्य कथासु वार्तासुमन्दं शिथिलं व्यस्तशौण्डीर्यमिति भावः । अफलो निष्फलश्छन्दोऽभिलाषो यत्र तत् । एतादृग्दारिद्र्यं धिक् । धिग्योगे द्वितीया 'धिगुपर्यादिषु त्रिष्वि' ति कारिका-वचनात् ॥३॥

परिभवभवनं श्रमास्पदं सुखपरिवर्जितमत्यनूर्जितम् ।
व्यसनमिव सदैव शोचनं धनविकलत्वमतीव दारुणम् ॥४॥

अथ ते तस्य शिष्याः प्रतोदसंचोदिता इव सदश्वा गुरुस्नेहात्समुपजातसंवेगाः सम्पन्नतरं प्रभूततरं च भैक्षमुपसंहरन्ति स्म। स तानुवाच--अलमनेनात्रभवतां परिश्रमेण । न भक्ष्योपहाराः कस्यचिद्दारिद्र्यक्षामतां क्षपयन्ति । अस्मत्परिक्लेशामर्षिभिस्तु भवद्भिरयमेव यत्नो धनाहरणं प्रति युक्तः कर्त्तुं स्यात् कुतः ?—

क्षुधमन्नं जलं तर्षं मन्त्रवाक्सागदा गदान् ।
हन्ति दारिद्र्यदुःखं तु सन्तत्याराधनं धनम् ॥५॥

---

पुनरपि दारिद्र्यमेव विशेषयन्नाह—

**परिभवभवनमिति** । परिभवस्यानादरस्यवमाननाया भवनमास्थानम् श्रमो विरामविहीनः प्रयासस्तस्यास्पदमाश्रयः ऊर्जितं वृद्धिस्तन्नास्त्यत्रेत्यत्यनूर्जितम्—अत्यर्थं नितरामनूर्जितमित्यत्यनूर्जितम्—सर्वथा वृद्धिरहितं निःस्वत्वम् । निःस्तेजस्तरं वा । व्यसनं विपद् । शोचनं क्लेशावहम् । धनेन वित्तेन विकलो हीन इति धनविकलस्तस्य भावस्तत्त्वम् । दारुणं भीषणम् ॥ ४ ॥

**अथेति** । प्रतोदेनाश्वाजन्या कशया संचोदिताः प्रेरिताः । सदश्वाः साधुवाहिनो विनीता इति यावत् । गुरोरुपाध्यायस्य स्नेहात्प्रेम्णः । समुपजातः समुद्भूतः संवेगः सम्भ्रमो येषु ते । सम्पन्नतरं पूर्वापेक्षया समृद्धतरम् । साधीयः संस्कृतमिति भावः । प्रभूततरं प्रचुरतरम् । भैक्षं भिक्षाकदम्बकम् । दारिद्र्येण निर्धनतया ( गमितां ) क्षामतां कृशताम् । न क्षपयन्ति न नाशयन्ति । अस्माकं यः क्लेशो व्यसनं तदमर्षिभिस्तदसहिष्णुभिः । सम्प्रति दारिद्र्यापनोदनस्योपायं दर्शयति—

**क्षुधमिति** । अन्नं भोज्यं वस्तुजातं क्षुधं बुभुक्षां हन्त्यपहरति । हन्तीति क्रियया सर्वेषामप्यन्वयः । तर्षं पिपासां जलं पानीयं हन्ति । अगदेनौषधेन सह वर्त्तमानेति सागदा । तथाभूता मन्त्रवाग्गुप्तोच्चरितं वचो गदान्व्याधीन् हन्ति । सन्ततेरन्वयस्याराधनं प्रसादकं धनं वित्तं दारिद्र्यं दौर्विध्यजां विपदं हन्ति । नास्ति किमपि निरुपायम् । सर्वथा सप्रतीकार एव व्याधिरिति ध्वनिः ॥ ४ ॥

शिष्या ऊचुः—किं करिष्यामो मन्दभाग्या वयम्, यदेतावान्नः शक्तिप्रयामः । अपि च,

> भैक्ष्यवद्यदि लभ्येरन्नुपाध्याय धनान्यपि ।
> नेदं दारिद्र्यदुःखं ते वयमेवं सहेमहि ॥६॥
> प्रतिग्रहकृशोपायं विप्राणां हि धनार्जनम् ।
> अप्रदाता जनश्चायमित्यगत्या हता वयम् ॥७॥

अध्यापक उवाच—सन्त्यन्येऽपि शास्त्रपरिदिष्टा धनार्जनोपायाः । जरानिष्पीतसामर्थ्यास्तु वयमयोग्यरूपास्तत्प्रतिपत्तौ ।

---

**शिष्या इति** । मन्दभाग्या हतदैवाः । शक्त्याः समर्थतायाः प्रयामो विस्तारः । किमित्येतावानेवेति ? —

**भैक्षवदिति** । यतो हि न धनानि भिक्षाप्रसादवत्सुलभानि । सत्सु सुलभेषु वित्तनिचयेषु सुप्रतीकार्यं स्याद्दारिद्र्यम्, नान्यथा ॥ ६ ॥ अतो दुर्बलानि धनानि, विशेषतस्त्वत्र । कुतः ?—विशदयति—

**प्रतिग्रहेति** । विप्राणां ब्राह्मणानां, प्रतिग्रह एव दानस्वीकरणमेव कृशः क्षुद्र उपायो विधिर्यस्य तत्, एवंविधं किल धनार्जनं वित्तसम्पादनम् । जनश्च पुरुषश्चाऽत्रास्मिन्देशेऽप्रदाताऽदानशीलः । जाताविकवचनम् । अगत्या गतिराहित्येनोपायाभावेन दैवगत्या वा । हता नष्टाः । अत्र दैवमुपालम्भमर्हति न वयमिति भावः ॥७॥

**अध्यापक इति** । शास्त्रेषु मनुयाज्ञवल्क्यादिप्रणीतेषु धर्मग्रन्थेषु परिदिष्टा प्रमाणरूपेण निबद्धाः स्वीकृता वा । जरया वार्धकेन निष्पीतं निःशेषेण पीतमुपहृतं सामर्थ्यं सत्त्वं येषां ते । अयोग्यरूपा असमर्थतरा अप्रभुतराः । 'प्रशंसायां रूपप्' । तस्यैवंविधस्योपायस्य प्रतिपत्तौ निष्पादने । अनुपहतोऽनष्टः पराक्रमः शक्तिर्येषां ते । प्रतिपत्तिं सम्पादनं सहते ( तस्य ) प्रभवतीति प्रतिपत्तिसहस्तस्य भाव, स्तत्ताम् । यावद्येन प्रकारेण । अध्यापनस्य विद्यादिवितरणस्य यः परिश्रमः प्रयासस्तस्य । ऋणमुद्धारः । ऋणं समुदयनमुद्धार इति कोषः । नास्ति ऋणं देयधर्मोऽस्येत्यनृणस्तस्य भावमानृण्यम् । व्यवसायोऽभिनिवेशस्तस्मिञ्छिथिलं मन्दं निष्क्रियं हृदयं मनो येषां तैः । दुःखेनाऽभिसम्भवा ( अभिसम्भवितुं शक्या ) इति दुरभिसम्भवा ।

शिष्या ऊचुः—वयमुपाध्याय जरयानुपहतपराक्रमाः । तद्यदि नस्तेषां शास्त्रविहितानामुपायानां प्रतिपत्तिसहतां मन्यसे, तदुच्यताम् । यावदध्यापनपरिश्रमस्यानृण्यं ते गच्छाम इति ।

अध्यापक उवाच—तरुणैरपि व्यवसायशिथिलहृदयैर्दुरभिसम्भवाः खल्वेवंविधा धनार्जनोपायाः । यदि त्वयमत्रभवतां निर्बन्धस्तच्छ्रूयतां—साधुः कतम एको धनोपार्जनक्रमः ।

आपद्धर्मस्तेयमिष्टं द्विजानामापच्चान्त्या निःस्वता नाम लोके ।
तस्माद्भोज्यं स्वं परेषामदुष्टैः सर्वं चैतद्ब्राह्मणानां स्वमेव ॥ ८ ॥
कामं प्रसह्याऽपि धनानि हर्तुं शक्तिर्भवेदेव भवद्विधानाम् ।
न त्वेष योगः, स्वयशो हि रक्ष्यं, शून्येषु तस्माद्व्यवसेयमेव ॥ ९ ॥

---

निर्बन्धोऽनुरोधो हठः साधुः शोभन इत्युपायं विशिष्याऽऽह । अथवा नपुंसके साधु, श्रूयतामिति क्रियां विशिनष्टि । क्रमः कल्पः । कल्पे विधिक्रमाविति कोषः ।

**आपद्धर्मेति** । आपदि व्यसने यो धर्मः कर्त्तव्यं स आपद्धर्मः । विपत्तिकालेऽधर्मस्य न्यूनवचनीयतोक्ता आपद्धर्मे यत्स्तेयं चौरकर्म तद्द्विजानां ब्राह्मणानामिष्टमनुज्ञातम् । शास्त्रपरिदृष्टमिदं प्रमाणं कुत्रत्यमिति मृग्यम् । स्तेयाजीवः शर्विलकोऽपि चौर्यप्रवृत्तः प्रमाणैस्तद्वचनीयतामपासितुं क्षणमपि न यतते । आह किलैकागारिकप्रवरो द्विजो मृच्छकटिके ( ३।१९ )

धिगस्तु खलु दारिद्र्यमनिर्वेदितपौरुषम् ।
यदेतद्गर्हितं कर्म निन्दामि च करोमि च ॥

**प्रकृतमनुसरामः** ।—आपत्सु च निःस्वता दरिद्रताऽन्त्या पराऽऽपत् । तस्मादेतत्कारणाददुष्टैः सज्जनैरपि—पापमकुर्वद्भिरिवेति वा भावः—परेषामन्येषां स्वं धनं भोज्यमास्वादनीयम्—येन केन प्रकारेणोपयोज्यतामुपनेयम् । अदृष्टैरिति पाठेऽलक्षितैरित्यर्थः । कर्नमहोदयास्तु 'आपद्धर्म' इति व्यस्तं सप्तम्यन्तं श्रेयांसं पाठं मन्यन्ते । सम्भवतितरां च प्रथमान्तो नष्टविसर्गः पाठोऽपि ।—तत्किम् ? यतो हि लोके संसारे सर्वमेतद्यत्किञ्चिदपि पदार्थजातमुपलभ्यते निखिलं तद्ब्राह्मणानां द्विजानां स्वमात्मीयम् मनुवचनमपि ( १।१००।१०१ ) तमेवार्थं प्रकारान्तरेण लक्षीकृत्य प्रस्तौति—

इति मुक्तप्रग्रहास्तेन ते छात्राः 'परम'मिति तत्तस्य वचनमयुक्तमपि युक्तमिव प्रत्यश्रौषुरन्यत्र बोधिसत्त्वात् ।

स हि प्रकृतिभद्रत्वात्तन्नोत्सेहेऽनुमोदितुम् ।
कृत्यवत्प्रतिपन्नं तैर्व्याहन्तुं सहसैव तु ॥ १० ॥

---

सर्वं स्वं ब्राह्मणस्येदं यत्किञ्चिज्जगतीगतम् ।
श्रैष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति ॥
स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च ।
आनृशंस्याद्ब्राह्मणस्य भुञ्जते हीतरे जनाः ॥

परं चौर्याय निर्जनप्रदेशेष्वेव प्रयतितव्यमित्याहाधस्तनेन श्लोकेन—

**काममिति** । कामं सत्यं यद्वद्विधानामस्मच्छिष्याणां प्रसह्य बलात्कारेण परेषामन्येषां धनानि वित्तानि हर्तुं चोरयितुं शक्तिः प्रभुता स्यादिति नात्र संशयः । तथाऽप्येष सप्रमाणयुक्त उपायो योगोऽनुशासनं न । नैष सर्वकालेषु सर्वदेशेषु प्रयोज्यो विधिः । अपि तु शून्येषु निर्जनेषु विविक्तेषु देशेषु व्यवसेयमनुष्ठेयम कस्मात् ?—हि यतः स्वयश आत्मगौरवं रक्ष्यं रक्षणीयं भवतीति ॥ ९ ॥

**इतीति** । मुक्ता विसृष्टाः शिथिलिताः प्रग्रहा रश्मय इव प्रग्रहाः प्रतिबन्धा येषां ते । अपि वा मुक्ताश्च ते प्रग्रहा बन्दिजनाश्चेति मुक्तप्रग्रहाः—प्रग्रहोपग्रहौ बन्द्यामिति कोषात् । परमं श्रेष्ठम् । अयुक्तमनुपपन्नम् । प्रत्यश्रौषुः प्रत्यूचुः । अन्यत्र बोधिसत्त्वाद्बोधिसत्त्ववर्जम् । अथ बोधिसत्त्वप्रशंसायामुद्गिरति—

**स हीति** । स बोधिसत्त्वः । प्रकृत्या स्वरसेन भद्रत्वात्साधुत्वात्, तद्गुरुवचनमनुमोदितुमनुमन्तुं नोत्सेहे न प्रबभूव । तैः सतीर्थ्यैश्च कृत्यवद्युक्ताचारवत्प्रतिपन्नं स्वीकृतं तच्चौरकर्म व्याहन्तुं प्रत्याख्यातुं तु सहसा सपद्युत्सहे इत्युभयत्राप्यन्वेति ॥१०॥

**व्रीडेति** । व्रीडया लज्जयाऽवनतं नम्रं वदनं मुखं यस्य सः । अनभिनन्दन्तमननुमोदमानम् । अप्रतिक्रोशन्तमप्रतिवदन्तमप्रत्यादिशन्तम् । निविष्टा प्रतिष्ठापिता गुणेषु सम्भावना समादरो येन सः । महासत्त्वे महात्मनि । किं न्वव्यवसितत्वात्पूर्वमकृतचौर्यत्वात्, उत वा मयि गुरावस्नेहतया निरनुबन्धत्वात्स्नेहशून्यया वृत्त्येति भावः, अयं चौर्ये नोपक्रमते ? उतापि वोऽधर्मस्याऽशास्त्राचारस्य संज्ञया विपरीतया भावनया ? समुत्पन्नः संजातो विमर्शः संशयो यस्य सः । तस्य बोधिसत्त्वस्य यः स्वभावः प्रकृतिस्तस्य व्यक्तीकरणार्थं प्रकटीकरणार्थम् । महाब्राह्मणेति बोधिसत्त्वं संबोधयति । सम्बुद्धिरियमत्र पूजायां, न तु कुत्सायाम् ।

व्रीडावनतवदनस्तु बोधिसत्त्वो मृदु विनिःश्वस्य तूष्णीमभूत्। अथ सोऽध्यापकस्तेषां बोधिसत्त्वमवेक्ष्य तं विधिमनभिनन्दन्तमप्रतिक्रोशन्तं, निविष्टगुणसम्भावनस्तस्मिन्महासत्त्वे, 'किंनु खल्वयमव्यवसितत्वान्निःस्नेहतया वा मयि स्तेयं न प्रतिपद्यते? उताऽधर्मसंज्ञयेति समुत्पन्नविमर्शस्तत्स्वभावव्यक्तीकरणार्थं बोधिसत्त्वमुवाच। भो महाब्राह्मण,

अमी द्विजा मद्व्यसनाऽसहिष्णवः समाश्रिता वीरमनुष्यपद्धतिम्।
भवानुत्साहजडस्तु लभ्यते न नूनमस्मद्व्यसनेन तप्यते ॥ ११ ॥
परिप्रकाशेऽप्यनिगूढविस्तरे ममाऽऽत्मदुःखे वचसा विदर्शिते।
कथं नु निःसम्भ्रमदीनमानसो भवानिति स्वस्थवदेव तिष्ठति ॥१२॥

अथ बोधिसत्त्वः ससम्भ्रमोऽभिवाद्योपाध्यायमुवाच—शान्तं पापम्। न खल्वहं निःस्नेहकठिनहृदयत्वादपरितप्यमानो गुरुदुःखैरेवमवस्थितः किन्त्वसम्भवादुपाध्यायप्रदर्शितस्य क्रमस्य। न हि शक्यमदृश्यमानेन क्वचित्पापमाचरितुम्। कुतः?—रहोऽनुपपत्तेः।

नास्ति लोके रहो नाम पापं कर्म प्रकुर्वतः।
अदृश्यानि हि पश्यन्ति ननु भूतानि मानुषान् ॥१३॥

---

**अमीति**। अमी एते द्विजाश्छिष्यरूपेण मामुपागता ब्राह्मणाः, मम यद्व्यसनं विपत्तिस्तदसहिष्णवोऽमृष्यन्तो वीरमनुष्यपद्धतिं वीरपुरुषैरनुसृतं मार्गं समाश्रिताः संश्रिताः सन्ति। भवांस्त्वन्यथा समाचरति। अनुत्साहेनोत्साहराहित्येन जडो मन्दोऽकिञ्चनकरोऽस्मद्व्यसनेनाऽस्मद्दुःखेन न तप्यते क्लेशं न वहति ॥११॥

पुनस्तद्विशिष्यैवाह—

**परिप्रकाश इति**। परिप्रकाशे सुस्पष्टे, परितोऽभितः प्रकाशेऽतिप्रसिद्धे वा। न निगूढो नितरां गूढो गुप्तो विस्तर आयामो यस्य तस्मिन्। निर्गतः सम्भ्रमः संवेगो यस्मात्स एव दीनमानसो विक्षुभितचेताः। स्वस्थवदनामयवत् ॥ १ ॥

**अथेति**। निर्गतः स्नेहः प्रेम यस्मात्स निस्नेहश्चासा,वथवा निःस्नेहं कर्म तेन जडमनुभूतिशून्यं हृदयं मनो यस्य तस्य भावस्तत्त्वात्। अवस्थितः संस्थितः—कर्मणि न प्रवृत्त इति भावः। असम्भवादसाध्यत्वात्। रहस एकान्तस्यानुपपत्तेरसिद्धत्वात्। तदेव विशदीकरोति।

**नास्तीति**। अदृश्यानि कर्मेन्द्रियैरसंज्ञेयानि भूतानि देवादयः पापकर्म प्रकुर्वतोऽशस्ते कार्ये रतान्मनुष्याञ्जनान् पश्यत्येव ॥ १३ ॥ अन्येऽपि पश्यन्ति। के?

कृतात्मानश्च मुनयो दिव्योन्मिषितचक्षुषः।
तानपश्यन्रहोमानी बालः पापे प्रवर्तते ॥१४॥
अहं पुनर्न पश्यामि शून्यं क्वचन किञ्चन।
यत्राऽप्यन्यं न पश्यामि नन्वशून्यं मयैव तत् ॥१५॥
परेण यच्च दृश्येत दुष्कृतं स्वयमेव वा।
सुदृष्टतरमेतत्स्याद्दृश्यते स्वयमेव तत् ॥१६॥
स्वकार्यपर्याकुलमानसत्वात्पश्येन्नवाऽन्यश्चरितं परस्य।
रागार्पितैकाग्रमतिः स्वयं तु पापं प्रकुर्वन्नियमेन वेत्ति ॥१७॥

तदनेन कारणेनाहमेवं व्यवस्थित इति। अथ बोधिसत्त्वः समभिप्रसादितमनसमुपाध्यायमवेत्य पुनरुवाच—

---

**कृतात्मान इति**। कृतात्मानः—कृताः संस्कृता आत्मानो येषां ते पुण्यात्मानो महासत्त्वाः। मुनयो वाचंयमाः। दिव्यानि भव्यानि चोन्मिषितान्युन्मीलितानि चक्षूंषि नेत्राणि येषां ते देवास्तेषां सततनिर्निमेषत्वात्। तान्मुनिदेवादीनपश्यन्ननवलोकयन्, बालो मूर्खो रहोमानी एकान्तं मन्यमानः पापे प्रवर्तते ॥१४॥ वस्तुतस्तु शून्यस्यासम्भवान्न किमप्यदृश्यम्—इति रस्तौति परस्तात्—

**अहमिति** परैः शून्यः प्रदेशोऽपि कर्तुः सत्त्वादशून्य एवेति भावार्थः ॥१५॥ एवमेव परैरदृश्यमपि स्वयं दृश्यमित्युपन्यस्यते परेण।

**परेणेति**। दुष्कृतं पापम् ॥ १६ ॥

**स्वकार्येति**। स्वस्याऽऽत्मनो यत्कार्यमारम्भस्तेन पर्याकुलं विक्षिप्तं मानसं चेतो यस्य, तस्य भावस्तत्त्वात्। अन्यः स्वात्मनो भिन्नो जनः परस्यापरस्य चरितमनुष्ठितं कर्म पश्येद्वीक्षेत न वा वीक्षेतेत्युभयथाऽपि सम्भवति। तु किन्तु रागे रजःप्रधाने कर्मण्यर्पिता निवेशितैकाग्रैकताना बुद्धिर्येन स कर्त्ता स्वयं पापकर्मणि रतो नियमेनाऽव्यभिचारेण वेत्ति जानाति। तदवचनीयकर्मणः प्रमाता भवत्येवेति भावः ॥ १७ ॥

**तदिति**। व्यवस्थितो निविष्टो बद्ध इति यावत्। समभिप्रसादितं संराधितं मनो हृदयं यस्य तम्। अवेत्य विज्ञाय।

न चात्र मे निश्चयमेति मानसं धनार्थमेवं प्रतरेद्भवानपि ।
व्यतीत्य लज्जां न तु धर्मवैशसे सुरेन्द्रतार्थेऽप्युपसंहृतं मनः ॥१९॥

स्वाभिप्रायं खलु निवेदयामि—

कपालमादाय विवर्णवाससा वरं द्विषद्वेश्मसमृद्धिरीक्षिता ।
अवेत्य को नाम गुणाऽगुणान्तरं गुणोपमर्दं धनमूल्यतां नयेत् ॥१८॥

अथ तस्योपाध्यायः प्रहर्षविस्मयाक्षिप्तहृदय उत्थायाऽऽसनात्सम्परिष्वज्यैनमुवाच—साधु साधु पुत्रक ! साधु साधु महाब्राह्मण ! प्रतिरूपमेतत्ते प्रशमालङ्कृतस्यास्य मेधाविकस्य ।

निमित्तमासाद्य यदेव किञ्चन स्वधर्ममार्गं विसृजन्ति बालिशाः ।
तपःश्रुतज्ञानधनास्तु साधवो न यान्ति कृच्छ्रे परमेऽपि विक्रियाम् ।२०

---

**न चात्रेति** । प्रतरेद्व्यवसायेत । प्रेरितं वा स्याद्भवता वित्तलिप्सयेति नाहं निश्चेतुं पारयामि । को नाम भवादृशोऽपि गुणागुणयोर्युक्तायुक्तयोर्भेदमन्तरमवेत्यावगत्य गुणानां युक्तार्थानमुपमर्दं हिंसनं धनमूल्यतां वित्तपरिणतां नयेत्प्रापयेद्गमयेत् ? ॥१८॥

अथ श्रेयांसं स्वाभिमतं मार्गं निर्दिशति—

**कपालमिति** । कपालं कर्परमादाय गृहीत्वा । निर्गतो वर्णो मुखशोभा रक्तश्वेतो वा, अपि वा यस्य तद्विवर्णं जीर्णशीर्णमुपहृतं वा वासस्तेन । वासो वसनम् द्विषतां शत्रूणां यानि वेश्मानि गृहाणि तेषां समृद्धिरभ्युदयः स्वम्पन्नतेक्षिता दृष्टा । वरं श्रेयः । सामान्यत्वात्क्रियाविशेषणत्वाद्वा नपुंसकत्वम् । सुरेन्द्रतार्थे देवस्वामित्वलाभायाऽपि धर्मवैशसे सदाचारोपमर्दं उपसंहृतं निवेशितं मनश्चेतो, न परमित्यनुषज्यते । कुतः ?—व्यतीत्य लज्जामिति । व्रीडापरित्यागस्तु सर्वथा हेय इति भावः । ह्रीवलेनाऽऽर्येण भवितव्यमिति चाधस्तादुपदिष्टो निष्कर्षो व्यङ्ग्यः ॥ १९ ॥

**अथेति** । प्रहर्षेणाह्लादेन विस्मयेनाश्चर्येण चाक्षिप्तमाकृष्टं हृदयं मनो यस्य सः । सम्परिष्वज्य समालिङ्ग्य । प्रतिरूपम् । मेधाविकस्य मतिमतः । स्वार्थे कन् ।

**निमित्तेति** । बालिशा मूढा यदेव किञ्चिदल्पमात्रमपि क्षुद्रं चिदेव निमित्तं कारणममासाद्य प्राप्य स्वस्याऽऽत्मनो धर्मस्य सद्वृत्तस्य मार्गं पन्थानं विसृजन्ति परित्यजन्ति । तपस्तापसभावः, श्रुतस्य सच्छास्त्रादेर्ज्ञानमध्यायश्चैव धनं वित्तं येषां ते साधवः सत्पुरुषाः परमेऽप्यतिकष्टश्रितेऽपि कृच्छ्र आपत्तिकाले विक्रियां मनोविकारं न यान्ति न भजन्ते । बोधिसत्त्वोऽस्योदाहरणम् ॥ २० ॥

त्वया कुलं सममलमभ्यलङ्कृतं समुद्यता नभ इव शारदेन्दुना।
तवार्थवत्सुचरितविश्रुतं श्रुतं, सुखोदयः सफलतया श्रमश्च मे ॥२१॥

तदेवमात्मलज्जयैव सत्पुरुषा नाचारवेलां लङ्घयन्तीति ह्रीबलेनार्येण भवितव्यम्। एवं ह्रीपरिखासम्पन्न आर्यश्रावकोऽकुशलं प्रजहाति कुशलं च भावयतीत्येवमादिषु सूत्रेषूपनेयम्। ह्रीवर्णप्रतिसंयुक्तेषु लोकाधिपतेयेषु चेति।

ब्राह्मणजातकं समाप्तम्।

---

**त्वयेति**। सम्-अमलमिति सममलम्। संस्कृत संगतं संपन्नं वा न तदमलं धवलमिति सममलं कुलं वंशः। समुद्यता समुद्गच्छता। शरदि भवः शारदः, स चासाविन्दुश्चन्द्रमास्तेन। नभ आकाशः। तव बोधिसत्त्वस्य। श्रुतमधीतम्। कीदृशं तच्छ्रुतम्'—सुचरितविश्रुतम्। सुचरितेन शोभनाचारेण विश्रुतं विशेषणाधिगतं, अनुष्ठानेन गृहीतसंकेतामिति यावत्। आपि वा विश्रुतं प्रसाधितं, यशसा परिकलितभुवनम्। पुनः कीदृशम् ?—अर्थवदन्वर्थमधिगताभिप्रायं संगतप्रयोजनमिति भावः। सफलतया पुष्पितफलितत्वात्। श्रमो यत्नः। सुखो निर्विघ्नः शुभ उदय उदर्कोयस्य सः। तथाभूतः समजनीति शेषः ॥२१॥

**तदेवमिति**। तदेवं तस्मात्। आर्येण साधुना। ह्रीर्लज्जा बलं शक्तिर्यस्य तेन। ह्रीरेवपैव परिखा गर्तस्तेन सम्पन्नः संयुक्तः संवेष्टितः। आर्यो भद्रश्चासौ श्रावको धर्मशुश्रूषुर्गृहमेधीति यावत्। प्रजहाति विसृजति। कुशलं क्षेमं क्षेमकरं वा। भावयत्यादरेण प्रतिगृह्णाति सम्पादयति। सूत्रम् निष्कर्षवाक्येषु। उपनेयमधिगम्यम्। ह्रीर्लज्जा विनयो वर्णो यस्य तेन (मनोभावेन) संयुक्तेषु सम्पुष्टेषु, लोकानां जनानामाधिपतेयेषु स्वामित्वविषयकेषु च (प्रबन्धेषु)। अत्राऽऽधिपतेयेष्विति नूनमाधिपत्येष्वित्यस्य स्थाने प्रमादपाठः। लोकापवादविषयेष्विति केचित्। आभ्यां बोधिसत्त्वस्यापरा विश्रुता कथाद्वयी निर्दिष्टा लक्ष्यते।



# राजर्षिभरतोपाख्यानम् ।

## ( श्रीमद्भागवतम् । )

## ( स्क० ५—अ० ७ )

## (१) सप्तमोऽध्यायः ।

श्रीशुक उवाच—

भरतस्तु महाभागवतो यदा भगवताऽवनितलपरिपालनाय सञ्चिन्तितस्तदनुशासनपरः पञ्चजनीं विश्वरूपदुहितरमुपयेमे ॥१॥

---

अध्यायानां त्रयेणैवमृषभाख्यानमीरितम् ।
अष्टभिर्भरताख्यानमतःप्रस्तूयतेऽमृतम् ॥ १ ॥

सप्तमे भरतो राज्ये चिरं यज्ञैर्हरिं यजन् ।
आरब्धकर्मनिर्वाणे हरिक्षेत्रेऽभजद्धरिम् ॥ २ ॥

( श्रीधरस्वामी )

एवमृषभचरितमुपवर्ण्य इदानीं तत्फलरूपस्य भरतस्य चरितमुपवर्णयति षड्भिरध्यायैः । **भरत** इति । महाभागवतो भरतो यदा **भगवता** ऋषभेणावनितलपरिपालनाय **सञ्चिन्तितः** संनियुक्तः तदा **तदनुशासनपरः** भूतलानुशासनपरः विश्वरूपस्य दुहितरं पञ्चजनीं नामोपयेमे विवाहितवान् ॥ १ ॥

तस्यामुह वा आत्मजान्कात्स्न्येनानुरूपानात्मनः पञ्च जनयामास भूतादिरिव भूतसूक्ष्माणि ॥ २ ॥

सुमतिं राष्ट्रभृतं सुदर्शनमावरणं धूम्रकेतुमिति अजनाभं नामैतद्वर्षं भारतमिति यत आरभ्य व्यपदिशन्ति ॥ ३ ॥

स बहुविन्महीपतिः पितृपितामहवदुरुवत्सलतया स्वे स्वे कर्मणि वर्त्तमानाः प्रजाः स्वधर्ममनुवर्त्तमानः पर्यपालयत् ॥ ४ ॥

---

**तस्यामुह वा** । पञ्चजन्यां ह्यात्मनः स्वस्य कात्स्न्येनानुरूपान् **पञ्चात्मजान्** सुमत्यादीनुत्पादयामास यथा भूतादिस्तामसोऽहङ्कारो **भूतसूक्ष्माणि** शब्दस्पर्शादीनीति । सारूप्ये सन्ततिवृद्धौ च दृष्टान्तः ॥ २ ॥

पूर्वमजनाभाख्यमेतद्वर्षं यतो यद्भरताधिपत्यादारभ्य **भारतं** समुदाहरन्ति स भरतो बहुशः महीपतिः पित्रादिवदतितरां वात्सल्येन स्वस्ववर्णाश्रमोचिते कर्मणि वर्त्तमानाः प्रजाः स्वयमपि स्वधर्ममनुवर्तमानः पर्यपालयत् ॥ ३-४ ॥

**ईजे** चेत्यादिप्रकृतिविकृतिभिरित्यन्तमेकं वाक्यम् **उच्चावचैर्नानारूपै र्यज्ञक्रतुभिः यज्ञो** यजनं देवतां प्रति द्रव्यत्यागात्मकैः क्रतुभिर्यज्ञपुरुषं भगवन्तमीजे (विश्वनाथस्तु यज्ञा अयूपाः क्रतवः सयूपाः उच्चावचैर्महाद्भिरल्पैश्च ) इष्टवान् । क्रतूनेव प्रपञ्चयति । अग्निहोत्रादीनां प्रकृतिविकृतिभिरिति यत्र पूर्णमङ्गजातमुपदिष्टं सेष्टिः **प्रकृति** यथा आग्नेयीष्टिः । यत्रान्यत्रोक्तमङ्गजातमुपजीव्यते सा **विकृतिः** यथा सौर्येष्टिः ॥५॥

यजनप्रकारमेवाह । **अनुसवनम्** प्रातरादिसवनत्रये **चातुर्होत्रविधिना** चातुर्होत्रं चतुर्भिः ऋत्विग्भिः क्रियमाणं यज्ञादि कर्म तद्विध्यनुगुणमित्यर्थः । विरचिताः अङ्गक्रिया येषु तेषु नानायागेषु **सम्प्रचरत्सु** प्रवर्तमानेषु सत्सु तत्र यागेषु **धर्माख्यं** यागसाध्यं धर्म इति व्यपदिश्यमानमपूर्वापरपर्यायं क्रियाफलं तद्भगवति वासुदेवे **भावयमानः** भगवदनुग्रहरूपमिति मन्वानः क्षणविध्वंसिनो यागादेः कालान्तरभाविस्वर्गादिफलसाधनत्वानुपपत्त्या तान्निकैर्यदभ्युपेतं स यागशक्त्या-त्मकमपूर्वं यागजन्यं फलसाधनमिति तदपोह्य ।

इष्टापूर्तं बहुधाजातं जायमानं विश्वम् ।
बिभर्ति भुवनस्य नाभिः तदेवाग्निस्तद्वायुः ॥

श्रुत्युक्तरीत्या इन्द्रादिदेवतान्तर्यामितयावस्थितस्य इति भगवतोऽनुग्रह एवापूर्वस्थानीय इति भावयमान इत्यर्थः । तदेव विशदयन् भगवन्तं विशिनष्टि ।

ईजे च भगवन्तं यज्ञक्रतुरूपं क्रतुभिरुच्चावचैः श्रद्धयाहृताग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुसोमानां प्रकृतिविकृतिभिरनुसवनं चातुर्होत्रविधिना ॥ ५ ॥

संप्रचरत्सु नानायागेषु विरचिताङ्गक्रियेष्वपूर्वं यत्तत्क्रियाफलं धर्माख्यं परे ब्रह्मणि यज्ञपुरुषे सर्वदेवतालिङ्गानां मन्त्राणामर्थनियामकतया साक्षात्कर्त्तरि परदेवतायां भगवति वासुदेव एव भावयमान आत्मनैपुण्यमृदितकषायो हविःष्वध्वर्युभिर्गृह्यमाणेषु स यजमानो यज्ञभाजो देवास्तान्पुरुषावयवेष्वभ्यध्यायत् ॥ ६ ॥

---

सर्वदेवतालिङ्गानाम् । उद्देश्यत्वेन स्मृतानां देवतालिङ्गानि स्मारकाणि चिह्नानि येषु तेषां मन्त्राणामर्थनियामकतया अर्थोऽभिधेय इन्द्रादिस्तस्य नियामकतयान्तः प्रविश्य धारकत्वेन नियन्तृतया प्रयोजननिर्वाहकतया वा साक्षादेव कर्त्तरि द्रष्टरि-मन्त्रकृतो वृणीतेतिवदयं निर्देशः यद्वा कर्त्तरि फलोत्पादयितरि कर्मणः फलसाधनत्वानुपपत्त्यापि नापूर्वं कल्प्यं किन्तु रात्रिसत्रप्रतिष्ठाफलवत् त्रिसरावेनामिन्द्रः प्रजया पशुभिस्तर्पयतीति वायुर्वैक्षेपिष्ठा देवतेत्याद्यर्थवादैः फलप्रदतयावगताग्नीन्द्रादिदेवतायास्तदेवाग्निस्तद्वायुरित्युक्तरीत्यान्तर्यामितयावगतब्रह्मण एव फलप्रदत्वमित्याख्येयं तदेवाह। यज्ञपुरुषे । यज्ञोद्देश्येन्द्रादिपुरुषरूपे परब्रह्माणि परदेवतायामिति एवं भावनमेवात्मनो नैपुण्यं । कौशलं तेन मृदिता निरस्ताः कषायाः कर्मवासना रागादयो वा यस्य । अध्वर्युभिरिति बहुवचनं नानाकर्माभिप्रायेण हविःषु चरुपुरोडाशाज्यादिषु गृह्यमाणेषु होमार्थमितिशेषः यजमानः स्वयं यज्ञैर्भाज्यन्त आराध्यन्त इति यज्ञभाजो देवा इन्द्रादयस्तान् पुरुषस्य परमपुरुषस्यावयवेष्वभ्यध्यायत्—

"यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः सूर्यश्चक्षुर्दिशः श्रोत्रं लोकपाला भुजेष्वासन्" इत्यादिद्विरूप्यप्रतिपादकशाखानुसारिणानुसंहितवानित्यर्थः ।

(राघवाचार्यः)

स यजमानो भरतः यज्ञभाजो देवानिन्द्रादीन् पुरुषस्य भगवतोऽवयवेषु बाह्वादिषु अभ्यध्यायत । इन्द्राय स्वाहेत्युक्तेर्मत्प्रभोर्बाहुपूजेयं सूर्यायस्वाहेत्युक्ते लोचनपूजेयमिति— भावयामास । पृथक् पृथग् देवतात्वेन पूजा ह्यनन्यताविघातिनी नतु तदङ्गत्वेनेति ( विश्वनाथः ) ।

एवं कर्मविशुद्ध्या विशुद्धसत्त्वस्यान्तर्हृदयाकाशशरीरे ब्रह्मणि भगवति वासुदेवे महापुरुषरूपोपलक्षणे श्रीवत्सकौस्तुभवनमालाऽरिदरगदादिभिरुपलक्षिते निजपुरुषहृल्लिखितेनात्मनि पुरुषरूपेण विरोचमान उच्चैस्तरां भक्तिरनुदिनमेधमानरयोऽजायत ॥७॥

एवं वर्षायुतसहस्रपर्यन्तावसितकर्मनिर्वाणावसरोऽधिभुज्यमानं स्वतनयेभ्यो रिक्थं पितृपैतामहं यथादायं विभज्य स्वयं सकलसम्पन्निकेतात् स्वनिकेतात्पुलहाश्रमं प्रवव्राज ॥८॥

---

एवं भगवदाराधनरूपकर्मयोगाद्यनुगृहीतो भक्तियोगो ऽप्यजायतेत्याह। एवमुक्तविधकर्मविशुद्धया शुद्धान्तःकरणस्य तस्य **भगवत्युच्चैस्तरा**मतितरां प्रतिदिन-**मेधमानो** वर्धमानो **रय** उत्कर्षो यस्याः सा भक्तिरजायतेत्यन्वयः भगवन्तं विशिनष्टि। **अन्तः** शरीरान्तः स्थितं **यद्धृदयं** पुण्डरीकाकारं तस्मिन् य **आकाशः** दहरः स **शरीरं** रूपं यस्य हृदयपुण्डरीकान्तर्वर्त्तिदहराकाशरूपे दहराकाशस्य परमात्मत्वात्। यद्वा हृदयकोशस्य शरीरे शिलापुत्रकस्य शरीरमितिवदयं निर्देशः। यद्वात्र हृदयाकाशशब्दो हृदयान्तर्वर्त्तिभूताकाशपरः स शरीरं यस्य तस्मिन्निति। हृदये आकाशते प्रकाशत इति हृदयाकाशो जीवः स शरीरं यस्येति वा ब्रह्मणि स्वरूपेण गुणैश्च निरतिशयबृहति भगवति षाड्गुण्यपूर्णे वासुदेवे सर्वान्तरात्मतया दीव्यमाने **महापुरुषरूपमुपलक्षणमा**कारो यस्य तस्मिन् श्रीवत्सादिभिरुपलक्षिते **अरिश्चक्रं दरः** शङ्खः असिः खड्गः **निजपुरुषाणां** भक्तानां **हृदि लिखिते** लिखितवन्निश्चलतरेत्यर्थः स्थिते तेनोक्तपुरुषरूपेण **स्वात्मनि** स्वमनसि विरोचमाने ॥ ७ ॥

एवमुक्तया वृत्त्या वर्षाणामयुतानि तेषां सहस्राणि तेषामन्ते तत्पर्यन्ते काले**ऽवसितो** निश्चितः **कर्मनिर्वाणावसरः** राज्यभोगादुपरमप्राप्तिसमयो येन सः **अधिकृत्य भुज्यमानं** पित्रादिपरम्पराया आगतमृक्थं धनं स्वतनयेभ्यो यथाविभागं विभज्य दत्वा स्वयं सकलानां सम्पदां निकेतादाश्रयात् **स्वनिकेतात्** स्वगृहात् **पुलहाश्रमं** शालिग्रामक्षेत्रं प्रति **प्रवव्राज** जगाम ॥ ८ ॥ (राघवाचार्यः)

यत्र ह वाव भगवान् हरिरद्यापि तत्रत्यानां निजजनानां वात्सल्येन सन्निधाप्यत इच्छारूपेण ॥९॥

यत्राश्रमपदान्युभयतो नाभिभिर्दृषच्चक्रैश्चक्रनदी नाम सरित्प्रवरा सर्वतः पवित्रीकरोति ॥ १० ॥

तस्मिन् वाव किल स एकलः पुलहाश्रमोपवने विविधकुसुमकिसलयतुलसिकाम्बुभिः कन्दमूलफलोपहारैश्च समीहमानो भगवत आराधनं विविक्त उपरतविषयाभिलाष उपभृतोपशमः परां निर्वृतिमवाप ॥ ११ ॥

तयेत्थमविरतपुरुषपरिचर्यया भगवति प्रवर्धमानानुरागभरद्रुतहृदयशैथिल्यः प्रहर्षवेगेनात्मन्युद्भिद्यमानरोमपुलककुलक औत्कण्ठ्यप्रवृत्तप्रणयबाष्पनिरुद्धावलोकनयन एवं निजरमणारुणचरणारविन्दानुध्यानपरिचितभक्तियोगेन परिप्लुतपरमाह्लादगम्भीरहृदयह्रदावगाढधिषणस्तामपि क्रियमाणां भगवत्सपर्यां न सस्मार ॥ १२ ॥

---

कोऽसौ पुलहाश्रमः यं प्रवव्राजेत्यत्राह । गद्यद्वयेन यत्र ह पुलहाश्रमे भगवान् हरिरधुनापि निजजनाना वात्सल्येन निजजनविषयकवात्सल्येन स्वेच्छापरिगृहीतरूपेण **सन्निधाप्यते** सन्निहितो भवतीत्यर्थः ॥ ९ ॥

यत्राश्रमस्थानान्युभयतः उपर्यधश्च नाभिर्येषां तैर्दृषच्चक्रैः शिलामध्यगैर्निमित्तभूतैश्चक्रनद्याख्या ( गण्डकीति विश्वनाथः ) सरितां प्रवरा श्रेष्ठा सर्वतः पवित्रीकरोति ॥ १० ॥

तस्मिन् पुलहाश्रमे वने **एकलः** असहायः नानाविधैः कुसुमादिभिः कन्दादिरूपैरुपहारैर्नैवेद्यैश्च भगवत आराधनं **समीहमानः** कुर्वाणः विविक्तः विशुद्धाहारः **उपरतो** निवृत्तो विषयेष्वभिलाषो यस्य अत एवोप**भृतः** समृद्धः **उपशमः** बाह्यान्तःकरणनिग्रहो यस्य सः **निर्वृतिं** प्रीतिरूपां परां भक्तिमवाप ॥ ११ ॥

एतदेव प्रपञ्चयति गद्यद्वयेन । एवं तयोक्तविधया अविच्छिन्नपरमपुरुषपरिचर्यया सर्वान्तरात्मनि भगवति निरतिशयकीर्त्तौ प्रवर्द्धमानो यः **अनुरागः** प्रेम तस्य बलेन उत्कर्षेण यत् **द्रुतं** द्रवीभूतं हृदयं तेन **शैथिल्यमनुद्यमो** यस्य **प्रहर्षवेगेनान**न्दातिशयेनात्मनि देहे उद्भिद्यमाने **रोमपुलककुलं** रोमाञ्चवृन्दं

इत्थं धृतभगवद्व्रत ऐणेयाजिनवाससाऽनुसवनाभिषेकार्द्र-कपिशकुटिलजटाकलापेन च विरोचमानः सूर्यर्चा भगवन्तं हिरण्मयं पुरुषमुज्जिहाने सूर्यमण्डलेऽभ्युपतिष्ठन्नेतदु होवाच ॥१३॥

---

यस्य समासान्तः ककारः । **औत्कण्ठ्येना**तिवृत्तेन प्रणयानन्दबाष्पेण निरुद्धो **ऽवलोको** ययोस्ते नयने यस्य सः । अभिरेमे उपरराभेत्यर्थः । एवं वर्तमानः तामपि क्रियां भगवत्सपर्यां न सस्मार । तत्र हेतुं वदन् विशिनष्टि । **निजरमणस्य** निरतिशयप्रीतिविषयस्य भगवतोऽरुणे चरणारविन्दे तयोरनुध्यानेनोपचितः समृद्धः यो भक्तियोगः कृत्स्नशुभाश्रयविषयः तेन **परिप्लुतः** सर्वतो व्याप्तः **परमाह्लादः** परमानन्दो यस्मिन् सः गम्भीरो हृदयह्रदस्तस्मिन्नेव **गाढा** निमग्ना **धिषणा** बुद्धिर्यस्य सः ॥ १२ ॥

एवं धृतानि भगवद्व्रतानि येन सः **एण्या** हरिण्याश्चर्म **ऐणेयं** तदेव **वासस्तेनानुसवनं** कालत्रये अभिषेकेण स्नानेन आर्द्राः कपिशाश्च कुटिलाश्च या जटास्तासां समूहेन विरोचमानः सूर्यमण्डले उद्गच्छति सति स्वयमुपतिष्ठन् सूर्यमण्डल-स्थं हिरण्मयं "एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश **आप्रणखात्** सर्व एव सुवर्णस्तस्य यथा **कप्यासं** पुण्डरीकमेवमक्षिणी" इत्यन्तरा-दित्यविद्योक्तं भगवन्तं सूर्यं वा सूर्यान्तर्वर्तिभगवत्प्रकाशिकया **ऋचा** वक्ष्यमाणया **यजन्** भजन् ऋगुक्तप्रकारं ध्यायन्नित्यर्थः एतादृगर्थकं वाक्यमुवाच ह ॥१३॥

ऋचमुदाहरति । परोरज इति । **सवितुः** सर्वलोकस्य प्रसवनादुत्पादनात् सविता "सर्वलोकप्रसवनात् सविता स तु कीर्तितः" इति स्मृतेः । यद्वा षूप्रेरणे प्रचोदयिता सविता चात्र विष्णुरेव 'विष्णोर्नामसहस्रं मे" इत्युपक्रम्य "सविता रविलोचन" इति सवितृशब्दस्य भगवन्नामतया पठितत्वात् तस्य **सवितुर्देवस्य** विष्णोर्भर्गस्तेजोमयं रूपम् इमः "इण् गतौ" इत्यस्माल्लट् उत्तमबहुवचने रूपमेतत् । शरणं गच्छेम इत्यर्थः । भर्गो विशिनष्टि **परोरजः** रजसः परं लोकं विरजसं लोकपरोऽत्र रजः शब्दः "लोकारजांस्युच्यन्ते इति यास्कोक्तेः । यद्वा **रजः** प्रकृतिमण्डलतः परं "क्षयन्तमस्य रजसः पराके आदित्यवर्णं तमसः परस्तात्" इति श्रुतेः रजसः प्रकृतिमण्डलात् पराके परस्तात् क्षयन्तं

**परोरजः सवितुर्जातवेदो देवस्य भर्गो मनसेदं जजान
सुरेतसाऽदः पुनराविश्य चष्टे हंसं गृध्राणं नृषद्रिङ्गिरामिमः ॥१४॥**

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
पारमहंस्याम् संहितायां वैयासिक्यामृष-
भदेवानुचरिते सप्तमोऽध्यायः ॥७॥

---

निवसन्तमित्यर्थः । **जातवेदः** जातं सततमाविर्भूतं वेदः ज्ञानं यस्य तत् नित्या-सङ्कुचितज्ञानमित्यर्थः । अत्र सवितृदेवभर्गपदैर्गायत्री प्रत्यभिज्ञाता भवति तत्रापि यथोक्त एवार्थः देवस्य भर्ग इम इति निर्देशः शिलापुत्रकस्य शरीरमितिवद्द्रष्टव्यः कीदृशोऽसौ देवः यस्य भर्ग इमस्तत्राह । **मनसा** सङ्कल्परूपज्ञानेनैवाचि-दचिदात्मकमिदं जगज्जजान ससर्ज **यश्चादः** स्वसृष्टं जगत् **स्वरेतसा** स्वस्य रेतः स्वशक्तिःस्तेन स्वशरीरभूतेन जीवेना **विश्यानुप्रविश्य** यद्वा इदं चिदचिदात्मकं जगत् स्वतेजसात्मीयसङ्कल्परूपेण ज्ञानेन प्रविश्य पूर्वं जीवान्तः प्रविष्टोऽपि पुनः करणकलेवरप्रेरणानुकूलव्यापारया स्वसङ्कल्परूपेण ज्ञानेन ( अन्तर्यामिरूपेणेति ) अनु प्राविश्येत्यर्थः । हंसं जीवं **चष्टे** पश्यति कृपया पालयतीत्यर्थः हंसं विशिनष्टि । गृध्राणं शब्दादिविषयान् काङ्क्षमाणं **नृषद्रिङ्गिरां** नृषीदति अवसादयति क्लेशयति संसारयति इति ( यद्वा नृषु सीदत्युपाधितया तिष्ठतीति विश्वनाथः ) नृषद्बुद्धिस्तस्या **रिङ्गिः** रिङ्गणं वृत्तिः ( "रिगि गतौ" इति धातुः ) बुद्धिवृत्तिरित्यर्थः तया **रात्या**ददाति कर्मफलानि भुङ्क्ते नृषद्रि-ङ्गिरस्तं नृषद्रिङ्गिरं छान्दसत्वात् । वा छन्दसि इति पूर्वरूपत्वाभावे सवर्णदीर्घे इति नृषद्रिङ्गिरं हंसमाचष्टे इतिपदैः तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचा-कशीति" इति श्रुतिः प्रत्यभिज्ञाता भवति तत्रापि यथोक्त एवार्थः तद्भर्गः **इमः** शरणं व्रजामः ॥ १४ ॥

इति श्री भागवते महापुराणे पञ्चमस्कन्धे श्रीमद्वीरराघवाचार्यकृत-
भागवतचन्द्रचन्द्रिकायां
सप्तमोऽध्यायः ॥ ७ ॥



## अष्टमोऽध्यायः

**श्रीशुक उवाच—**

एकदा तु महानद्यां कृताभिषेकनैयमिकावश्यको ब्रह्माक्षरमभिगृणानो मुहूर्त्तत्रयमुपदकान्त उपविवेश ॥ १ ॥

तत्र तदा राजन् ! हरिणी पिपासया जलाशयाभ्याशमेकैपोपजगाम ॥ २ ॥

---

अष्टमे भजतो विष्णुं तस्य कर्मान्तरायतः ।
एणरक्षाप्रसक्तस्य जातमेणत्वमीर्यते ॥ १ ॥

कृपयापि कृतः सङ्गः पतनायैव योगिनः ।
इति प्रदर्शयन्नाह भरतस्यैणपोषणम् ॥ २ ॥

( श्रीधरस्वामी )

स भरत एकदा कर्हिचिन्महानद्यां चक्रनद्यां कृताभिषेकःकृतः अभिषेकः स्नानं **नैयमिकं** नियमतयावश्यकं नित्यनैमित्तिकं च येन स **ब्रह्माक्षरं** प्रणवं जपन्नुद**कान्ते** नद्यास्तीरे मुहूर्त्तत्रयमुपविष्टवान् ॥ १ ॥

हे राजन् ! **तत्र** तीरे तदा भरतावस्थानसमये **हरिणी** एणी पिपासया **जलाभ्याशं** जलसमीपं प्रत्येकैवासहायैव जगाम ॥ २ ॥

तया पेपीयमान उदके तावदेवाविदूरेण नदतो मृगपतेरुन्नादो लोकभयङ्कर उदपतत् ॥ ३ ॥

तमुपश्रुत्य सा मृगवधूः प्रकृतिविक्लवा चकितनिरीक्षणा सुतरामपि हरिभयाभिनिवेशव्यग्रहृदया पारिप्लवदृष्टिरगततृषा भयात् सहसैवोच्चक्राम ॥ ४ ॥

तस्या उत्पतन्त्या अन्तर्वत्न्या उरुभयावगलितो गर्भः स्रोतसि निपपात ॥ ५ ॥

तत्प्रसवोत्सर्पणभयखेदातुरा स्वगणेन वियुज्यमाना कस्यांचिद्दर्यां कृष्णसारसती निपपाताथ च ममार ॥ ६ ॥

---

तया हरिण्या उदके नितरां पेपीयमाने अत्यासक्त्या पीयमाने सति **अविदूरे** समीप एव **नदतो** ध्वनिं कुर्वतो **मृगपतेः** सिंहस्य लोकभयङ्कर **उन्नादो** ध्वनिरुदपद्यत हरिण्या श्रुतोऽभवदित्यर्थः ॥ ३ ॥

तमुन्नादमुपश्रुत्याकर्ण्य सा मृगस्य वधूर्हरिणी **प्रकृत्या** स्वभावेनैव **विक्लवा** व्याकुला सुतरां **हरिभयस्य** सिंहभयस्याभिनिवेशेन व्यग्रं व्याकुलं हृदयं यस्याः सा अतएव **पारिप्लवदृष्टिश्चञ्चलदृष्टिरत** एव **चकितनिरीक्षणा** प्रतिहतानिरीक्षणा **अगता**नपगता **तृषा** पिपासा यस्याः सा तथाभूतैव **सहसा** आशु **उच्चक्राम** नदीमुल्लङ्घितवती ॥ ४ ॥

उत्पतन्त्या अन्तर्वत्न्याः पूर्णगर्भिण्या तस्या हरिण्या गर्भ **उरुभयेन** सिंहभयेन**ावगलितः** स्वस्थानात्प्रच्युतो स्रोतसि प्रवाहे **निपपात** पतितोऽभूदित्यर्थः ॥ ५ ॥

**तत्प्रसवो** गर्भपातः **उत्सर्पण**मुल्लङ्घनं भयं चेत्येतैः यः खेदस्तेन**ातुरा** पीडिता **स्वयूथेन** वियुक्ता कृष्णसारसती कृष्णमृगवधूः **कस्यांचिद्दर्यां** गिरिगुहायां निपपात अथ पतनानन्तरं ममार मृतवती च ॥ ६ ॥

तं त्वेणकुणकं कृपणं स्रोतसाऽनूह्यमानमभिवीक्ष्यापविद्धं बन्धुभिरिवानुकम्पया राजर्षिर्भरत आदाय मृतमातरमित्याश्रमपदमनयत् ॥ ७ ॥

तस्य ह वा एणकुणक उच्चैरेतस्मिन्कृतनिजाभिमानस्याहरहस्तत्पोषणपालनलालनप्रीणनानुध्यानेनात्मनियमाः सहयमाः पुरुषपरिचर्यादय एकैकशः कतिपयेनाहर्गणेन वियुज्यमानाः किल सर्व एवोदवसन् ॥ ८ ॥

अहो बतायं हरिणकुणकः कृपण ईश्वररथचरणपरिभ्रमणरयेण स्वगणसुहृद्बन्धुभ्यः परिवर्जितः शरणं च मोपसादितो मामेव मातापितरौ भ्रातृज्ञातीन् यौथिकांश्चैवोपेयाय नान्यं कञ्चन वेद, मय्यतिविस्रब्धश्चात एव मया मत्परायणस्य पोषणपालनप्रीणनलालनमनसूयुनाऽनुष्ठेयं शरण्योपेक्षादोषविदुषा ॥ ९ ॥

---

**तत्स्रोतसा** प्रवाहेणोह्यमानमेणकुणकमेणस्यापत्यमभिवीक्ष्य राजर्षिर्भरतः **मृता माता यस्य तं मृतमातरं** बन्धुभिः स्वपित्रादिभिरपविद्धं परित्यक्तमित्यनुकम्पया **आदाय** हस्ते गृहीत्वा स्वाश्रमस्थानमनयत्प्रापितवान् ॥ ७ ॥

एतस्मिन्नेणशिशौ **कृतः निजाभिमानः** आत्मीयत्वाभिमानो येन तस्य भरतस्याहरहस्तस्यैणशिशोः पोषणाद्यनुध्यानेन ध्यानेन तत्र **पोषणमाहारेण पालनं** व्याघ्रादिभ्यो रक्षणं **प्रीणनं** कण्डूयनादि **लालनं** करस्पर्शपूर्वं चुम्बनादि एतैर्यदनुध्यानमासक्तिस्तेनान्तरायेण भगवत्परिचर्यादयः **आत्मनियमाः** शौचाचारादयः **सहयमाः** अहिंसादिभिः सहिताः सर्वे एव धर्माः प्रत्यहमेकैकशो वियुज्यमानाः सन्तः कतिपयेनाहर्गणेनोदवसन्नुत्सन्ना बभूवुः ॥ ८ ॥

तदासक्तिं प्रपञ्चयति । अहो इत्यादिना इति कृतानुषङ्ग इत्यन्तेन । अयं हरिणकुणकः **ईश्वररथचरणं** कालचक्रं तस्य परिभ्रमणवेगेन **स्वगणादिभ्यो** विवर्जितं अतएव कृपणो दीनोऽयं मां शरणमासादितः प्राप्तश्च मामेव मातापित्रादिबुद्ध्या **उपेयाय** प्राप्तः **यूथिकाः** सङ्घातिनः **मोपेयाय** मामेव गोपायनं गोप्तारमाधिकं मन्वानः मत्तोऽन्यं कञ्चन गोप्तारं न वेद मय्येवातिविस्रब्धोऽतितरां विश्वासयुक्ता मतिर्यस्य सः अतः कारणादेव मत्परायणस्य मदेकशरणस्य हरिणकुणकस्य पोषणादिकम् एतस्मिन्निमित्ते मम स्वार्थो पश्यतोऽस्यसूयारहितेन

नूनं ह्यार्याः साधव उपशमशीलाः कृपणसुहृद एवंविधार्थे स्वार्थानपि गुरुतरानुपेक्षन्ते ॥ १० ॥

इति कृतानुषङ्ग आसनशयनाटनस्थानाशनादिषु सह मृगजहुना स्नेहानुबद्धहृदय आसीत् ॥ ११ ॥

कुशकुसुमसमित्पलाशफलमूलोदकान्याहरिष्यमाणो वृकसालावृकादिभ्यो भयमाशंसमानो यदा सह हरिणकुणकेन वनं समाविशति ॥ १२ ॥

पथिषु च मुग्धभावेन तत्र तत्र विषक्तमतिप्रणयभरहृदयः कार्पण्यात्स्कन्धेनोद्वहति एवमुत्सङ्ग उरसि चाधायोपलालयन् मुदं परमामवाप ॥ १३ ॥

---

मयावश्यमनुष्ठेयं हि यस्माच्छरण्योपेक्षा शरणागतानादरः विदुषां **दोषः** प्रत्यवायकरः यद्वा शरणं गन्तव्या **शरण्या** रक्षकत्वेन विश्वसनीयास्तेषा**मुपेक्षा** शरणागतविषयेष्वनादरः विदुषां दोष इति ॥ ९ ॥

अत एवार्याः साधवः परोपकारशीलाः उपशमस्वभावाः कृपणेषु सुहृदः सौहार्दवन्त एवंविधार्थे शरणागतरक्षणार्थे स्वार्थान् स्वप्रयोजनानि **गुरुतरानपि उपेक्षन्ते** गुरुतरानपि प्रयोजनाननादृत्यैवंविधशरणागतरक्षणं कुर्वन्ति ॥ १० ॥

नूनमित्येवं कृतानुषङ्गः कृतः **अनुषङ्गः** आसक्तिर्येन भरतः आसनाद्यवस्थासु तत्रासनमुपवेशनमटनं सञ्चरणमशनं भोजनं कन्दमूलादीनां मृगजहुना मृगापत्येन सह स्नेहस्तेनानुबिद्धं हृदयं येन तथाभूत आसीत् ॥ ११ ॥

स्नेहानुबन्धमेवाह । कुशकुसुमेत्यादिना । स्वदयन्तीत्यन्तेन कुशादीन्याहरिष्यमाणः यदि मृगेण विना गच्छामि चेत्तर्ह्येनं वृकादयो भक्षयेयुरिति बुद्ध्या शालावृकादिभ्यो भयमाशङ्कमानः **सालावृका** अरण्यश्वानः हरिणकुणकेन सहैव वनं प्रविशति पथि च मुग्धभावेन **सौकुमार्येण औत्कण्ठ्येन** वा **विषक्तमतिः** आसक्तमतिर्वा गन्तुमसमर्थो भवति नेच्छति वा मृगस्तदा तं **प्रणयस्य** स्नेहस्योत्कर्षो यस्मिंस्तद्धृदयं यस्य तथाभूतो भरतः **कार्पण्यान्**मृगविश्लेषजडः स्वासहिष्णुत्वरूपादैन्यात् स्कन्धेनोद्वहति स्कन्धयोरारोप्य गच्छति एवमासनसमये उत्सङ्गे शयनसमये उरसि चाधाय परमां **मुदमवाप** प्राप्तवान् ॥ १२ ॥ १३ ॥

क्रियायां निर्वर्त्यमानायामन्तरालेऽप्युत्थायोत्थाय यदैनमभिचक्षीत तर्हि वाव स वर्षपतिः प्रकृतिस्थेन मनसा तस्मा आशिष आशास्ते स्वस्ति स्याद्वत्स ! ते सर्वत इति ॥ १४ ॥

अन्यदा भृशमुद्विग्नमना नष्टद्रविण इव कृपणः सकरुणमतितर्षेण हरिणकुणकविरहविह्वलहृदयसन्तापस्तमेवानुशोचन् किल कश्मलं महदभिरम्भित इति होवाच ॥ १५ ॥

अपि बत स वै कृपण एणबालको मृतहरिणीसुतोऽहो ममानार्यस्य शठकिरातमतेरकृतसुकृतस्य कृतविस्रम्भः तदविगणयन् सुजन इवागमिष्यति ॥ १६ ॥

अपि क्षेमेणास्मिन्नाश्रमोपवने शष्पाणि चरन्तं देवगुप्तं द्रक्ष्यामि ॥ १७ ॥

---

**क्रियायां** नित्यनैमित्तिकादिक्रियायां निर्वर्त्यमानायां क्रियमाणायां सत्यामन्तराले मध्ये क्षणे क्षणे उत्थायोत्थाय यदैनं मृगमभि**चक्षीत** पश्यति **तर्हि** वा तदा हि स वर्षपतिः भरतः प्रकृतिस्थेन मनसा तस्मै मृगाय आशिष आशास्ते आशीराशासनमेवाह । स्वस्तीति । हे वत्स ! **ते** तुभ्यं **सर्वतः** सर्वत्र देशे काले च स्वस्ति स्यादिति आशास्ते । स्तादिति पाठेऽप्ययमेवार्थः स्ताद् भूयात् ॥ १४ ॥

अन्यदा मृगस्यादर्शने तु सकरुणं यथा भवति तथा एवमनुशोचन्निति वक्ष्यमाणप्रकारेण प्रोवाचेत्यन्वयः । कथम्भूतं अनुशोच**न्नष्टधन इव** नितरां भीतमना **अतितर्षेणौ**त्सुक्येन हरिणकुणकसेवाविरहेण विह्वले हृदये सन्तापो **यस्य** महत्कश्मलं मोहमभिलम्भितः प्रापितः ॥ १५ ॥

किमुवाच तदाह । अपीति । मम तदनार्यत्वादिकमविगणयन् **कृतः** विस्रम्भो येन तथाभूत एवात्मप्रत्ययेन स्वबुद्ध्या एव सुजन इवागमिष्यत्यपि आगच्छेत् किं **क्षेमेण** वृकादिभिरनुपहतं तत्र हेतुः **दैवेन** भगवता गुप्तं रक्षितं मदाश्रमसमीपवने **शष्पाणि** कोमलतृणानि **चरन्तं** भक्षयन्तमपि द्रक्ष्यामि ॥ १६ ॥ १७ ॥

अपि च न वृकः शालावृकोऽन्यतमो वा नैकचर एकचरो वा भक्षयति ॥ १८ ॥

निम्लोचति ह भगवान् सकलजगत्क्षेमोदयस्त्रय्यात्माद्यापि मम न मृगवधून्यास आगच्छति ॥ १९ ॥

अपिस्विदकृतसुकृतमागत्य मां सुखयिष्यति हरिणराजकुमारो विविधरुचिरदर्शनीयनिजमृगदारकविनोदैरसन्तोषं स्वानामपनुदन् ॥ २० ॥

क्ष्वेलिकायां मां मृषासमाधिनाऽऽमीलितदृशं प्रेमसंरम्भेण चकितचकित आगत्य पृषदपरुषविषाणाग्रेण लुठति ॥ २१ ॥

आसादितहविषि बर्हिषि दूषिते मयोपालब्धो भीतभीतः सपद्युपरतरास ऋषिकुमारवदवहितकरणकलाप आस्ते ॥ २२ ॥

---

वृकः शालावृको वा नैकचरो यूथचरो वराहादिरसहायचरो व्याघ्रादिर्वा अपि न भक्षयति। सकललोकानां क्षेमो यस्मात् स उदयो यस्य त्रयी वेद आत्मा स्वरूपं यस्य सः सूर्यो भगवान् निम्लोचत्यस्तं गच्छति किलाद्यापि मम **मृगवधून्यासः** निक्षेपभूतः मृगो नागच्छति। हरिण एव राजकुमारः हरिणसंबन्धिकुमारो वा आगत्य मामपि सुखयिष्यतीत्यन्वयः। किं कुर्वन् विविधैः **रुचिरैर्दर्शनीयैर्मृगदारकविनोदैः** स्वीयानां नः **असन्तोषं** खेदमपनुदन् ॥ १९ ॥ २० ॥

सम्भवति चैतदित्याह। क्ष्वेलिकायां स्वेन सह सहक्रीडायाम् मृषा यः समाधिस्तेनामीलिते दृशौ येन तं प्रेमसंरम्भेण प्रणयकोपेन पृषज्जलबिन्दुः तद्वद**परुषेण** मृदुना विषाणाग्रेण चकितं चकितं पुनः पुनः प्रतिहतं यथा तथा आवृत्य परितो व्यावृत्य **लुठति** संघट्टयति ॥ २१ ॥

आसादितं हविर्यस्मिन् **बर्हिषि** दर्भे **दूषिते** दन्ताकर्षणादिचापलत्वेन दूषिते सति मयाधिक्षिप्तः सन् भीतः तत्क्षणमेव **उपरतरासः** निवृत्तक्रीडः **अवहितः** निश्चलीकृतः **करणानामिन्द्रियाणां** कलापो येन एवंभूतः ऋषेः कुमारवदास्ते ॥ २२ ॥

किं वा अरे आचरितं तपस्तपस्विन्याऽनया यदियमवनिः सविनयकृष्णसारतनयतनुतरसुभगशिवतमखरखुरपदपङ्क्तिभिर्द्रविणविधुरातुरस्य कृपणस्य मम द्रविणपदवीं सूचयन्त्यात्मानं च सर्वतः कृतकौतुकं द्विजानां पदवीं स्वर्गापवर्गकामानां देवयजनं करोति ॥ २३ ॥

अपिस्विदसौ भगवानुडुपतिरेनं मृगपतिभयान्मृतमातरं मृगबालकं स्वाश्रमपरिभ्रष्टमनुकम्पया कृपणजनवत्सलः परिपालयति ॥ २४ ॥

किंवाऽत्मजविश्लेषज्वरदवदहनशिखाभिरुपतप्यमानहृदयस्थलनलिनीकं मामुपसृतमृगीतनयं शिशिरशान्तानुरागगुणितनिजवदनसलिलामृतमयगभस्तिभिः स्वधयतीति च ॥ २५ ॥

---

इति बहुधा प्रलप्योत्थाय बहिर्निर्गतः सन् खुराघातभूभागोपलम्भसंभ्रान्तहृदय आह । किंवेति । अरे अहो तपस्विन्या सम्भाव्यमानयाऽनया क्षित्या किं तप आचरितं यद्यस्मादियं क्षितिः सविनयस्य कृष्णसारतनयस्य सुभगाश्च शिवतमाश्च खराश्च कठिनाश्च खुरा येषु तेषां पातानां तलाङ्कितानां पङ्क्तिभिर्द्रविणं मृगास्तेन रहितस्यात एवातुरस्य दुःखितस्य मम द्रविणमार्गं सूचयन्ती सती स्वात्मानं च ताभिः पङ्क्तिभिः कृतमण्डनं स्वर्गापवर्गकामानां द्विजानां यज्ञभूमिं करोति "यस्मिन् देशे मृगः कृष्णस्तस्मिन् धर्मान्निबोधत" इति स्मृतेः ॥ २३ ॥

उदिते चन्द्रे तस्मिन् मृगं दृष्ट्वा स्वमृगत्वं सम्भावयन्नाह । अपिस्विदिति । सिंहभयान्मृता माता यस्य तं मदाश्रमात्परिभ्रष्टं मृगबालकं कृपणजनवत्सलोऽसौ भगवानुडुपतिश्चन्द्रः कृपयाऽपिस्वित् परिपाति ॥ २४ ॥

चन्द्ररश्मिस्पर्शसुखं प्राप्याह । किंवेति । सम्भावनायामात्मजाविश्लेषेण मृगवियोगेन यो ज्वरस्तापः स एव दहनः तस्य ज्वालाभिरुपतप्यमाना हृदयरूपा स्थलनलिनी यस्य तज्जलस्थं पद्मं तापं सोढुमलमिति स्थलग्रहणम् उपसृतोऽनुगतः मृगीतनयो येन मां योऽयं चन्द्रः स्वधयति विश्रान्तिं विगमयति कैः शिशिरवच्छान्तं च मय्यनुरागेण गुणितं चावर्तितं च पुनः पुनः स्रवत् यत् सलिलं तदेवामृतमया गभस्तयः किरणास्तैः लोके हि मान्त्रिका मुखसलिलैस्तापं शमयन्तीति

एवमघटमानमनोरथाकुलहृदयो मृगदारकाभासेन स्वारब्धकर्मणा योगारम्भणतो विभ्रंशितः स योगतापसो भगवदाराधनलक्षणाच्च कथमितरथा जात्यन्तर एणकुणक आसङ्गः साक्षान्निःश्रेयसप्रतिपक्षतया प्राक्परित्यक्तदुस्त्यजहृदयाभिजातस्य तस्यैवमन्तरायविहतयोगारम्भणस्य राजर्षेर्भरतस्य तावन्मृगार्भकपोषणपालनप्रीणनलालनानुषङ्गेणाविगणयत आत्मानमहिरिवाखुबिलं दुरतिक्रमः कालः करालरभस आपद्यत ॥ २६ ॥

तदानीमपि पार्श्ववर्त्तिनामात्मजमिवानुशोचन्तमभिवीक्षमाणो मृग एवाभिनिवेशितमना विसृज्य लोकमिमं सह मृगेण कलेवरं मृतमनु न मृतजन्मानुस्मृतिरितरवन्मृगशरीरमवाप ॥ २७ ॥

---

प्रसिद्धम् उपसृतमृगीतनय इति पाठे मनोरथान्तरमेतत् उपसृतः प्राप्तो मृगीतनयः किं वा स्वधयतीति शेषं सर्वं समानम् ॥ २५ ॥

इत्युक्तरीत्या एवं शब्दोऽनुक्तमनोरथान्तरद्योतकः उक्ता अनुक्ताश्चाघटमाना ये मनोरथास्तैराकृष्टं हृदयं यस्य स भरतः **मृगदारकाभासेन** मृगपुत्रव्याजेन प्रारब्धकर्मणामन्तरायभूतेन **योगारम्भणतः** ज्ञानयोगारम्भात् स्वयोगतपसः स्ववर्णाश्रमोचितकर्मयोगरूपात्तपसः भगवदाराधनलक्षणाद्भगवद्भक्तिरूपाच्च तपसः **विभ्रंशितो** विभ्रष्टोऽभूत् । प्रारब्धकर्मत्वे हेतुः कथमितरथेति इतरथा प्रारब्धकर्ममूलत्वाभावे मृगदारकासक्तिः जात्यन्तरैणकुणके साक्षात् स्वपुत्र इव कथमासङ्गः स्यात् श्रेयसः प्रतिपक्षतया मुक्तिविरोधितया पूर्वं परित्यक्ताः **दुस्त्यजाः हृदयाभिजाताः** औरसा येन तस्यैव पुनरेवंविधेनान्तरायेण विहितो योगारम्भो यस्य तस्य राजर्षेर्भरतस्य मृगार्भकस्य पोषणादिनिमित्तेनानुषङ्गेणात्मानमविगणयतः प्रमत्तस्य तावदेव **करालरभसः** तीव्रवेगः **कालः** मृत्युकालः **दुरतिक्रमः** अवर्जनीयः मूषकबिलं **प्रत्यहिः** सर्प **इवापद्यत** प्राप्तः ॥ २६ ॥

स भरतस्तदानीमपि मरणसमयेऽपि स्वपार्श्ववर्तिनं मृगमात्मजमिवानुशोचन्तमभिवीक्षमाण आत्मीयाभिमानेन पश्यन् मृगमिव**आसक्तमना** इमं देहं मृगेण सह **विसृज्य** कलेवरमन्वनुसृज्य अमृता अविनष्टा पूर्वजन्मानुस्मृतिर्यस्य तथाभूतः **इतरवत्** ... इतरवन्मृगशरीरमवाप ।

तत्रापि हृत्वा आत्मनो मृगत्वकारणं भगवदाराधनसमीहानुभावेनानुस्मृत्य भृशमनुतप्यमान आह ॥ २८ ॥

अहो कष्टं भ्रष्टोऽहमात्मवतामनुपथाद्यद्विमुक्तसमस्तसङ्गस्य विविक्तपुण्यारण्यशरणस्यात्मवत आत्मनि सर्वेषामात्मनां भगवति वासुदेवे तदनुश्रवणमननसङ्कीर्तनाराधनानुस्मरणाभियोगेनाशून्यसकलयामेन कालेन समावेशितं समाहितं कार्त्स्न्येन मनस्तत्तु पुनर्ममाबुधस्यारान्मृगसुतमनु परिसुस्राव ॥ २९ ॥

इत्येवं निगूढनिर्वेदो विसृज्य मृगीं मातरं पुनर्भगवत्क्षेत्रमुपशमशीलमुनिगणदयितं शालग्रामं पुलस्त्यपुलहाश्रमं कालञ्जरात्प्रत्याजगाम ॥ ३० ॥

---

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥

( भगवद्गीता )

इत्युक्तरीत्या मृगमनुस्मरन्मृगत्वमेवावापेत्यर्थः ॥ २७ ॥

तत्रमृगजन्मन्यात्मनः मृगत्वनिमित्तं पौर्वभवभगवदाराधनानुष्ठानप्रभावेण मृगासङ्ग एवेत्यनुस्मृत्य नितरामनुतप्यमानः आह ॥ २८ ॥

तदेवाह । अहो इति । आत्मविदां ज्ञानिनामनुपथान्मार्गानुसरणादहं भ्रष्टः अहो कष्टमिति खेदं प्राप्तस्तमेवाह । यद्यस्मात्त्यक्ताः समस्ता देहतदनुबन्धिसङ्गा येन **विविक्तं** निर्जनं पुण्यारण्यं तदेव **शरणं** गृहं यस्य **आत्मवतः** जितेन्द्रियस्य मम सर्वेषां भूतानामन्तरात्मभूते भगवति वासुदेवे तस्य भगवतः अनुश्रवणाद्यभिनिवेशेनाशून्याः सकला यामा यस्मिंस्तेन कालेन सम्यगावेशितं कार्त्स्न्येन सर्वविषयेभ्यः **समाहितं** प्रत्याहृतं यन्मनस्तदेव पुनरधुना रागान्मृगसङ्गादबुधस्य मम मृगसुतमनुसृत्य परितः कार्त्स्न्येन योगात् **सुस्राव** भ्रंशितम् ॥ २९ ॥

इत्येवं **निगूढः** अनाविष्कृतो निर्वेदो येन सः मातरं **मृगीं** हरिणीं विसृज्य उपशमशीलानां **दयितं** प्रियं भगवदभिव्यक्तिस्थानं शालग्रामाख्यं पुलहाश्रमं प्रति कालञ्जराख्यात्स्वोत्पत्तिस्थानात्पर्वतादाजगाम ॥ ३० ॥

तस्मिन्नपि कालं प्रतीक्षमाणः सङ्गाच्च भृशमुद्विग्न आत्मसहचरः शुष्कपर्णतृणवीरुधा वर्त्तमानो मृगत्वनिमित्तावसानमेव गणयन्मृगशरीरं तीर्थोदकक्लिन्नमुत्ससर्ज ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां
संहितायां वैयासिक्याम् भरतचरिते
अष्टमोऽध्यायः ॥ ८ ॥

---

तस्मिन्पुलहाश्रमे आत्मैव **सहचरः** सहायो यस्य स एकाकी समल्पं कालं मृगदेहावसानकालं प्रतीक्षमाणः सङ्गात्कस्यचिदपि सङ्गान्नितरां भीतः **शुष्कपर्णा**दिना आहारेण **वर्त्तमानः** कालं नयन्नात्मनो मृगत्वनिमित्तस्य प्रारब्धस्यावसानमेव गणयन तीर्थोदके **क्लिन्नमार्द्रम्** अर्द्धं दकास्थितं मृगशरीरमु**त्ससर्ज** तत्याज ॥३२॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टमोऽध्यायः ॥

३

## नवमोऽध्यायः

श्रीशुक उवाच ।

अथ कस्यचिद्द्विजवरस्याङ्गिरःप्रवरस्य शमदमतपःस्वाध्यायाध्ययनत्यागसन्तोषातितिक्षाप्रश्रयविद्याऽनसूयात्मज्ञानानन्दयुक्तस्यात्मसदृशश्रुतशीलाचाररूपौदार्यगुणा नव सोदर्या अङ्गजा बभूवुर्मिथुनं च यवीयस्यां भार्यायाम् ॥ १ ॥

यस्तु तत्र पुमांस्तं परमभागवतं राजर्षिप्रवरं भरतमुत्सृष्टमृगशरीरं चरमशरीरेण विप्रत्वं गतमाहुः ॥ २ ॥

---

नवमे जडविप्रत्वे तस्य रागाद्यभावतः ।
भद्रकालीपशुत्वेऽपि निर्विकारत्वमर्यते ॥१॥
पितुः प्राप्तात्मविज्ञानो भरतो मृगतां गतः ।
प्रारब्धकर्मवेगेन तदन्ते जडविप्रताम् ॥२॥

(श्रीधरस्वामी)

एवमारब्धभगवद्भक्तियोगस्यापि भरतस्य प्रारब्धकर्मासक्तमृगासक्तबाम्मृगत्वापत्तिं प्रारब्धकर्मावसाने मृगत्वनिवृत्तिं चाभिधायेदानीम् ।

"नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ इति ॥

तत्रापि स्वजनसङ्गाच्च भृशमुद्विजमानो भगवतः कर्मबन्ध-विध्वंसनश्रवणस्मरणगुणविवरणचरणारविन्दयुगलं मनसा विदध-दात्मनः प्रतिघातमाशङ्कमानो भगवदनुग्रहेणानुस्मृतस्वपूर्वजन्मा-वलिरात्मानमुन्मत्तजडान्धबधिरस्वरूपेण दर्शयामास लोकस्य ॥३॥

---

नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ।
प्राप्य पुण्यकृतांल्लोकानुषित्वा शाश्वतीः समाः ॥
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ।
अथवा योगिनामेव कुले भवति धीमताम् ॥

( भगवद्गीता )

इत्युक्तरीत्या तस्य विशिष्टकुलप्रसूतिं देहादिष्वनादरं ततो मुक्तिं चाभिधत्ते । अथेत्यादिना । अथ मृगशरीरत्यागानन्तरमाङ्गिरसस्य **यवीयस्यां** कनिष्ठायां भार्यायां **यन्मिथुनं** स्त्रीपुंस्युग्मं समजायत तत्र मिथुने यस्तु पुमान् तं **परम-भागवतं** राजर्षिप्रवरमुत्सृष्टं मृगशरीरं येन तं चरमशरीरेण विप्रत्वं गतमाहुरित्यन्वयः आङ्गिरसप्रवरं विशिनष्टि । द्विजश्रेष्ठस्याङ्गिरस गोत्रोद्भवानां मध्ये प्रवरस्य **शमदमा-**न्तर्बाह्येन्द्रियनिग्रहौ **तपोऽ**नशनादि **स्वाध्यायाध्ययनं** वेदाध्ययनं **त्यागो दानं सन्तोषो** दैवाल्लब्धेन **तितिक्षा** द्वन्द्वसहिष्णुता प्रश्रयो विनयः **विद्या** शास्त्रजन्यज्ञानं **अनसूया** परेषुदोषानाविष्करण**मात्मज्ञानं** ज्ञानयोगः **आनन्दो** ब्रह्मानन्दानुभवरूपो भक्तियोगः **आत्मना** स्वेन स्वसदृशाः श्रुतादयो गुणाः येषां ते **श्रुतं** वेदार्थश्रवणं नव सोदरा **अङ्गना** आत्मजाः बभूवुः ज्येष्ठायाम् भार्यायामिति शेषः ॥ १ ॥ २ ॥

तत्रापि विप्रजन्मन्यपि स्वजनसङ्गादात्मनः **प्रतिघातं** भ्रंशमाशङ्कमानस्तत्र हेतुः भगवदनुग्रहेणैवानुस्मृता पूर्वजन्मनामावलि परम्परा येन सः आत्मानमुन्म-त्तादिरूपेण लोकस्य दर्शयामास । किं कुर्वन् कर्मबन्धविध्वंसनश्रवणं स्मरणं गुणानां **विवरणं** कथनं यस्य तत्कर्मबन्धविध्वंसनसमर्थश्रवणादियुक्तमित्यर्थः एवं विधं भगवतश्चरणारविन्दंमनसा **विदधानः** विशेषेण धारयन् ॥ ३ ॥

तस्यापि ह वा आत्मजस्य विप्रः पुत्रस्नेहानुबद्धमना आसमावर्त्तनात्संस्कारान् यथोपदेशं विदधान उपनीतस्य च पुनः शौचाचमनादीन् कर्मनियमाननभिप्रेतानपि समशिक्षयत् अनुशिष्टेन हि भाव्यं पितुः पुत्रेणेति ॥ ४ ॥

स चापि तदु ह पितृसन्निधावेवासध्रीचीनमिव स करोति छन्दांस्यध्यापयिष्यन् सह व्याहृतिभिः प्रणवशिरस्त्रिपदीं सावित्रीं ग्रैष्मवासन्तिकान् मासानधीयानमप्यसमवेतरूपं ग्राहयामास ॥ ५ ॥

एवं स्वतनुज आत्मन्यनुरागावेशितचित्तः शौचाध्ययनव्रतनियमगुर्वनलशुश्रूषणाद्यौपकुर्वाणककर्माण्यनभियुक्तान्यपि समनुशिष्टेन भाव्यमित्यसदाग्रहः पुत्रमनुशास्य स्वयं तावदनधिगतमनोरथः कालेनाप्रमत्तेन स्वयं गृह एव प्रमत्त उपसंहृतः ॥ ६ ॥

---

स विप्रः आङ्गिरसस्तस्य जडादिवेषस्य पुत्रस्य पुत्रस्नेहेनानुबद्धमासक्तं मनो यस्य तथाभूतः सन् **समावर्तनं** स्नातकं तत्पर्यन्तान् संयतान् **संस्कारान्** गर्भाधानादीन् यथाविधि कुर्वाण उपनीतस्य तस्यानभिप्रेतान् पूर्ववासनयागतत्वात् शिक्षणीयत्वेनानभिप्रेतानपि शौचाचमनादीन् कर्मनियमान्नित्यनैमित्तिकादिभेदेन नियतान् समशिक्षयत् । शिक्षायां हेतुमाह । अनुशिष्टेनेति । पितुः सकाशादनुशिष्टेन विविच्य ज्ञापितेनैव पुत्रेण भवितव्यमितीति बुद्ध्येत्यर्थः ॥४॥

सोऽपि च पितुः शिक्षानिर्बन्धनिवृत्तये तत्सन्निधा**वसध्रीचीनम**समीचीनमिव करोति छन्दांस्यध्यापयिष्यन् "श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि । युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान्" इत्युक्तरीत्या वेदानध्यापयिष्यन् तावदादौ व्याहृतिभिः सह प्रणवशिरः सहितां त्रिपदीं **सावित्रीं** गायत्रीं **व्याहृतयो** भूरादयः **प्रणवमोङ्कारः** शिर ओमापोज्योतिरित्यादि एवंभूतां सावित्रीं ग्रैष्मवासन्तिकान् मासांश्चतुरो मासानधीयानमप्यध्ययनं कुर्वाणमपि पुत्र**मसमवेतरूपं** स्वरादिगायत्र्यानुपूर्व्या वियुक्तं न भवति यथा तथा ग्राहयामास, तावता कालेनापि स्वरानुपूर्व्या वियुक्तव्याहृतिसहिता गायत्री तस्य दृढा नाभूदित्यर्थः ॥ ५ ॥

एवं स्वात्मजे आत्मनि 'आत्मा वै पुत्रनामासि" इति श्रुत्युक्तरीत्या पुत्ररूपे **आत्मन्यनुरागेणावेशित**मासञ्जितं येन स शौचादीन्यौपकुर्वाणस्य सावधिब्रह्मचर्य-

अथ यवीयसी द्विजसती स्वगर्भजातं मिथुनं सपत्न्या उपन्यस्य स्वयमनुसंस्थया पतिलोकमगात् ॥ ७ ॥

पितर्युपरते भ्रातर एनमतत्प्रभावविदस्त्रय्यां विद्यायामेव पर्यवसितमतयो न परविद्यायाम् जडमतिरिति भ्रातुरनुशासननिर्बन्धान्न्यवृत्सन्त ॥ ८ ॥

स च प्राकृतैर्द्विपदपशुभिरुन्मत्तजडबधिरेत्यभिभाष्यमाणो यदा तदनुरूपाणि प्रभाषते कर्माणि च स कार्यमाणः परेच्छया करोति विष्टितो वेतनतो वा याच्ञया यदृच्छया वोपसादितमल्पं बहु मिष्टं (मृष्टं) कदन्नं वाऽभ्यवहरति परं नेन्द्रियप्रीतिनिमित्तम्, नित्यनिवृत्तनिमित्तस्वसिद्धविशुद्धानुभवानन्दस्वात्मलाभाधिगमः सुखदुःखयोर्द्वन्द्वनिमित्तयोरसम्भावितदेहाभिमानः ॥ ९ ॥

---

वतो यानि कर्माणि **उपकुर्वाणो** गुरुशुश्रूषादिना वेदाध्ययनादि कुर्वाणः ब्रह्मचारी **शौचं** स्नानादिजन्या शुद्धिः व्रतानि काण्डव्रतादीनि तान्यभियुक्तानप्यविस्मृतवेदस्य तस्याध्ययनानपेक्षत्वादध्यापनाङ्गानि कर्मण्यनुपयुक्तानीत्यर्थः सम्यगनुशिष्टेन पुत्रेण भाव्यमित्यसदाग्रहः दुरभिमानवान् पुत्रमनु**शास्यापि** शिक्षित्वापि अनधिगतः मनोरथः पुत्रवैदुष्यरूपो येन सः तावदेवाप्रमत्तेन **कालेन** मृत्युना स्वयंगृहे प्रमत्तः सन्नु**पसंहृतः** मृत इत्यर्थः ॥ ६ ॥

अथ संहृत्यनन्तरं यवीयसी कनिष्ठा द्विजसती द्विजभार्या **स्वगर्भजातं मिथुनं सपत्न्या उप** समीपे **निधाय** सपत्न्यधीनं कृत्वा स्वय**मनुसंस्थया** अनुसरणप्रक्रियया पतिलोक**मगात्** प्राप्तवती ॥ ७ ॥

**पितर्युपरते** मृते सति भ्रातरो नव एनं जडमतिरिति बुद्ध्याऽनुशासनरूपान्निर्बन्धा**न्न्यवृत्सन्त** निवर्त्तितुमैच्छन् शिक्षां नाकुर्वन्नित्यर्थः। जडमतिरित्यत्र हेतुं वदन्विशिनष्टि। अ**तत्प्रभावविदस्तस्य** भ्रातुः प्रभावमजानन्तः तत्राप्यहेतुः त्रय्यामेव विद्यायां कर्मा**वबोधात्मककेवलवेदविद्यायामेव** पर्यवसितमतयः न **ब्रह्मविद्यायां** वेदान्तविद्यायां पर्यवसितमतयः ॥ ८ ॥

यदा स जडविप्रो द्विपदपशुभिर्हि उन्मत्तजडबधिरेत्यभिभाष्यमाणस्तदा तदनुरूपाणि उन्मत्ताद्यनुरूपाणि उन्मादान्धजाड्यबाधिर्यादिसूचकानि वचांस्यभाषते स्वयं स्वयं निर्व्यापारोऽपि परेच्छया कार्यमाणः कर्माणि करोति मूल्यमन्तरेण बला-

शीतोष्णवातवर्षेषु वृष इवानावृताङ्गः पीनः संहननाङ्गः स्थण्डिलसंवेशनानुन्मर्दनामज्जनरजसा महामणिरिवानभिव्यक्तब्रह्मवर्चसः कुपटावृतकटिरुपवीतेनोरुमषिणा द्विजातिरिति ब्रह्मबन्धुरिति संज्ञायाऽतज्ज्ञजनावमतो विचचार ॥ १० ॥

यदा तु परत आहारं कर्मवेतनत ईहमानः स्वभ्रातृभिरपि केदारकर्मणि निरूपितस्तदपि करोति किन्तु न समविषमन्यूनमधिकमिति वेद कणपिण्याकफलीकरणकुल्माषस्थालीपुरीषादीन्यप्यमृतवदभ्यवहरति ॥ ११ ॥

---

यत्कर्म कार्यते सा **विष्टिः वेतनं** भृतिः विष्टयादिभिर्यदृच्छया दैवाद्वोपसादितं प्राप्तं तदप्यल्पं बहु वा मृष्टं कदन्नं वाऽभ्यवहरति भक्षयति परं केवलं प्रारब्धोपभोगयुक्तदेहधारणार्थं भुङ्क्ते नत्विन्द्रियप्रीतये ॥ ९ ॥

तत्र हेतुं वदन्विशिनष्टि । नित्येति । **नित्यं निवृत्तानि निमित्तानि** सुखदुःखनिमित्तानि पुण्यापुण्यकर्माण्यात्मस्वरूपतिरोधायकानि यस्मात्स एवंविधो यः स्वसिद्धविशुद्धानुभवानन्दः **स्वात्मा** नित्यसिद्धरागादिरहितज्ञानानन्दस्वरूप आत्मा तस्याधिगमः याथात्म्यविज्ञानं तन्नित्यं सदा यस्य **द्वन्द्वानि** शीतोष्णादीनि निमित्तानि कारणानि ययोस्तयोः सुखदुःखयोरसम्भावितदेहाभिमानः द्वन्द्वनिमित्तसुखदुःखादिप्रयुक्तदेहात्माभिमानसम्भावनामात्ररहित इत्यर्थः अतएव शीतातपादिषु **वृष इव** बलीवर्द इवानावृतमनाच्छन्नमङ्गं यस्य सः पीनः परिपुष्टसर्वावयवः **संहननानि** कठिनान्यङ्गानि यस्य **स्थाण्डिलसंवेशनं** भूशयनम् **अनुन्मर्दनं** तैलेनाङ्गमर्दनाभावः **अमज्जनं** मलापनयनार्थं स्नानाभावः एभिर्यद्रजः शरीरमालिन्यं **तेनानभिव्यक्तमप्रकटं ब्रह्मवर्चसं** ब्रह्मतेजो यस्य यथा महामणिर्बाह्यमलेनानभिव्यक्ततेजा भवति कुत्सितेन पटेनावृता कटिर्यस्य **उरुमषिणा** प्रभूतं मलं यस्य तेनोपवीतेनोपलक्षणेन द्विजातिरित्यादिसंज्ञाया वाचकशब्देन व्यवह्रियमाणोऽतज्ज्ञजनैर्योगीश्वरचर्यानभिज्ञजनै**रवमतः** निन्दितः सन् विचचार ॥१०॥

यदा तु **वेतनाद्**भृतेः परेभ्यः आहार**मीहमानः** इच्छन्भवति । वेतनमिति पाठे आहारमितत्यस्यानन्तरं लब्धुमिति शेषः । **आहार**मन्नादिकं लब्धुं वेतनमीहमानः कुर्वाणो भवति तदा आहारप्रलोभनेन स्वभ्रातृभिः **केदारकर्मणि** शालि-

अथ कदाचित्कश्चिद्वृषलपतिर्भद्रकाल्यै पुरुषपशुमालभतापत्यकामः ॥ १२ ॥

तस्य ह दैवमुक्तस्य पशोः पदवीं तदनुचराः परिधावन्तो निशि निशीथसमये तमसावृतायामनधिगतपशव आकस्मिकेन विधिना केदारान् वीरासनेन मृगवराहादिभ्यः संरक्षमाणमङ्गिरःप्रवरसुतमपश्यन् ॥ १३ ॥

अथ त एनमनवद्यलक्षणमवमृश्य भर्तुःकर्मनिष्पत्तिं मन्यमाना बद्ध्वा रशनया चण्डिकागृहमुपानिन्युर्मुदा विकसितवदनाः ॥ १४ ॥

---

क्षेत्रकर्दमविलोडनादौ नियुक्तस्तदपि केदारकर्म करोति । किं त्वत्र कर्दमस्य प्रक्षेपे क्षेत्रं समम्भवेदित उद्धरणे विषमं स्यादिति न वेद वैषम्यं नैव पश्यति । न्यूनमधिकं वा स्यादिति भ्रातृभिर्दत्तान्नकणादीनप्यमृतवद्भक्षयति । **कणाः** चूर्णतण्डुलाः **पिण्याकः** तैलयन्त्रोद्धृतं तिलपिष्टं, **फलीकरणं** तुषः, **कुल्माषाः** कुलत्थाः दुष्टा माषा **स्थालीपुरीषं** पात्रलग्नं दग्धान्नम् ॥ ११ ॥

एवं तस्य देहानादरमभिधायाथ "कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम्" इत्युक्तरीत्या मरणोद्योगेऽप्यसम्भ्रमं वक्तुं तस्याश्चर्यतमत्वमाविष्कुर्वन्नाह । अथेति । हे विष्णुरात ! भरतस्येदं वक्ष्यमाणमद्भुतं कर्म शृणु । **कश्चिद्वृषल्याः** शूद्रायाः पतिः पुत्रकामः भद्रकाल्यै पशुं पुरुषपशुमालभमानः पुत्रश्चेन्मम भविता तदा भवत्यै पुरुषपशुमालप्स्ये इति कृतसङ्कल्पोऽभूदित्यर्थः ॥ १२ ॥

तस्यैवं कृतसङ्कल्पस्य पुत्रप्राप्तिरूपसिद्ध्यनन्तरं दैवाल्लब्धं पशुमानयतेत्युक्तास्तदनुचराः शूद्राः दैवाद्विमुक्तस्य आलम्भ्यस्य पशोः पदवीं प्रति परितो **धावन्तः** अन्वेषमाणाः तमसा व्याप्तायां निशि रात्रावर्द्धरात्रसमये अनधिगतः पशुर्यैस्ते **आकस्मिको** दैवनिमित्तो विधिः प्रकारस्तेन वीरासनेन ऊर्ध्वावस्थानेन **केदारान्** मृगादिभ्यः संरक्ष्यमाणं, गोवलीवर्दन्यायेन वराहशब्दप्रयोगः, आङ्गिरसप्रवरस्य **सुतं भरतमपश्यन्** दृष्टवन्तः ॥ १३ ॥

अथैनमाङ्गिरससुतम**नवद्यानि** निर्दुष्टान्यङ्गानि यस्य पङ्गुत्वकाणत्वादिरहितमवमृश्य ज्ञात्वा भर्तुः कर्मणः पुरुषपश्वालम्भनकर्मण निष्पत्तिं मन्यमाना

अथ पणयस्तं स्वविधिनाऽभिषिच्याहतेन वाससाऽऽच्छाद्य भूषणालेपस्रक्तिलकादिभिरुपस्कृतं भुक्तवन्तं धूपदीपमाल्यलाजकिसलयाङ्कुरफलोपहारोपेतया वैशससंस्थया महता गीतस्तुतिमृदङ्गपणवघोषेण च पुरुषपशुं भद्रकाल्याः पुरतः अपि उपवेशयामासुः ॥ १५ ॥

अथ वृषलराजपणिः पुरुषपशोरसृगासवेन देवीं भद्रकालीं यक्ष्यमाणस्तदभिमन्त्रितमसिमतिकरालनिशितमुपाददे ।१६।

इति तेषां वृषलानां रजस्तमःप्रकृतीनां धनमदरज उत्सिक्तमनसां भगवत्कलावीरकुलं कदर्थीकृत्योत्पथेन स्वैरं विहरतां हिंसाविहाराणां कर्मातिदारुणं यद्ब्रह्मभूतस्य साक्षाद् ब्रह्मर्षिसुतस्य निर्वैरस्य सर्वभूतसुहृदः सूनायामप्यननुमतमालम्भनं तदुपलभ्य ब्रह्मतेजसाऽतिदुर्विषहेण दन्दह्यमानेन वपुषा सहसोच्चचाट सैव देवी भद्रकाली ॥ १७ ॥

---

रशनया रज्वा बध्वा मुदा विकसितानि वदनानि येषां ते चण्डिकाया भद्रकाल्या मन्दिरं प्रत्युपनिन्युर्नीतवन्तः ॥ १४ ॥

अथ पणयश्चोराः तमाङ्गिरससुतं स्वविधिना विशसनविधिनाभिषिच्य स्नापयित्वाहतेन नूतनेन वाससा वस्त्रेणाच्छाद्य भूषणादिभिरुपस्कृतमन्नं भुक्तवन्तं धूपादिभिरुपेतया युक्तया वैशससंस्थया हिंसाविधानेन महता स्तुत्यादिघोषेण च पुरुष एव पशुस्तं भद्रकाल्या अग्रे उपवेशयामासुः ॥ १५ ॥

अथ वृषलराजस्य पणिः पुरोहितत्वेन वर्त्तमानश्चोरः पुरुषपशोरसृगेवासवं मद्यं तेन च भद्रकालीं यक्ष्यमाणः तर्पयिष्यमाणः तदभिमन्त्रितं भद्रकालीमन्त्राभिमन्त्रितमतिभयङ्करं तीक्ष्णधारमासिं खड्गमुपाददे गृहीतवान् ॥ १६ ॥

इतीत्थं तेषां वृषलानां रजस्तमः प्रचुराणां धनमद एव रजस्तेन उत्सिक्तममर्यादं मनो येषां भगवत्कलया युक्तं वीराणां ब्राह्मणानां कुलं कदर्थीकृत्य तुच्छीकृत्य उत्पथे दुर्मार्गे यथेच्छं विहरतां हिंसैव विहारो येषां तेषां यदतिदारुणमालम्भनरूपं कर्म तदुपलभ्य सैव भद्रकाली देवी ब्रह्मभूतस्य ब्रह्मसाम्यमाप्यमानस्य ब्रह्मर्षेराङ्गिरसः सुतस्य सूनायां हिंसायामप्यननुमतस्य दुर्विषहेण सोढुमशक्येन ब्रह्मतेजसातितरां दह्यमानं वपुस्तेन हेतुना सहसा आशूच्चचाट प्रतिमां त्यक्त्वा बहिर्निर्गताभूदित्यर्थः ॥ १७ ॥

भृशममर्षरोषावेशरभसविलसितभृकुटिविटपकुटिलदंष्ट्रारुणेक्षणाटोपातिभयानकवदना हन्तुकामेवेदं महाट्टहासमतिसंरम्भेण विमुञ्चन्ती तत उत्पत्य पापीयसां दुष्टानां तेनैवासिना विवृक्णशीर्ष्णां गलात्स्रवन्तमसृगासवमत्युष्णं सह गणेन निपीयातिपानमदविह्वलोच्चैस्तरां स्वपार्षदैः सह जगौ ननर्त्त च विजहार च शिरःकन्दुकलीलया ॥ १८ ॥

एवमेव खलु महदभिचारातिक्रमः कार्त्स्न्येनात्मने फलति ॥ १९ ॥

न वा एतद्विष्णुदत्त ! महदद्भुतं यदसम्भ्रमः स्वशिरश्छेदन आपतितेऽपि विमुक्तदेहाद्यात्मभावसुदृढहृदयग्रन्थीनां सर्वसत्त्वसुहृदात्मनां निर्वैराणां साक्षाद्भगवताऽनिमिषारिवरायुधेना-

---

अमर्षोऽपराधासहनं रोषश्च वपुषो दाहस्तयोरावेशस्य रभसेन वेगेन विलसितो विजृम्भितो भृकुटीलक्षणो विटपः शाखा कुटिला दंष्ट्राश्चारुणे ईक्षणे च तेषामाटोप सम्भ्रमस्तेनातिभयङ्करं वदनं यस्या इदं जगद्धन्तुकामेव हन्तुमुद्यतेवाट्टहासं सनादं हासं मुञ्चन्ती ततः स्थानादुत्पत्य वृक्णानि छिन्नानि शीर्षाणि शिरांसि येषां तेषामतिगर्वितानां पापिष्ठानां कण्ठात् स्रवन्तं प्रसृतमत्युष्णमसृगासवं रुधिररूपं मद्यं परिवारेण सह निपीयाति अत्यन्तरुधिरपानजमदेन विह्वला परवशो स्वपार्षदगणैः सहोच्चैस्तरां जगौ गानं कृतवती ननर्त च शिरांस्येव कन्दुकानि तेषां क्रीडया विजहार विहारं कृतवती ॥ १८ ॥

ननु भद्रकाल्याराधनमेवं कथं विपरीतफलं तत्राह । एवमेवेति महत्स्वभिचाररूपः हिंसारूपोऽतिक्रमोऽपराधः कार्त्स्न्येनात्मने अभिचारिनृणामेव फलति किल ॥ १९ ॥

नन्वेवमसंभावितमेवेदं यन्मरणाद्यव्याकुलत्वं मारकेषु द्रोहाभावश्च तत्राह । न चैतदिति । हे विष्णुदत्त ! भागवतपरमहंसानां भागवताश्च ते परमहंसाश्च तेषामेवंविधानां स्वशिरश्छेदे आपतिते प्राप्तेऽपि यदसंभ्रमः यः असंभ्रमः इत्येतन्म-

**प्रमत्तेन तैस्तैर्भावैः परिरक्ष्यमाणानां तत्पादमूलमकुताश्चिद्भयमुपसृतानां भागवतपरमहंसानाम् ॥ २० ॥**

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां
संहितायां वैयासिक्याम् भरतचरिते
नवमोऽध्यायः ।

---

इदद्भुतमतीवाश्चर्यं न भवति । **परमहंस**शब्दो विरक्तपरः आङ्गिरससुतस्य चतुर्थाश्रमप्रवेशाभावात् असंभ्रमे हेतुं वदन् विशिनष्टि ।

**मुक्तस्त्यक्तः** देहादिष्वात्मभावः आत्माभिमानरूपः सुदृढो ग्रन्थिर्यैः सर्वेषु भूतेषु सुहृत्सौहार्दयुक्तः आत्मा मनो येषामत एव निर्वैराणां देहात्माभिमानाभावाद्वैराभावाच्च व्याकुलत्वाद्यभाव इति भावः । देहात्माभिमानादिसत्त्वेऽपि न तेषां मरणभयमस्तित्याह । साक्षाद्भगवताभिरक्ष्यमाणानां केन **अनिमिषः** कालस एवारिश्चक्रं तेन वरायुधेनाप्रमत्तेनानलसेन तैस्तैर्भावैश्च भद्रकालीमारकप्रभृतिष्वपीश्वरात्मकत्वभावैश्चेति ॥ २० ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
नवमोऽध्यायः ॥



## दशमोऽध्यायः ।

श्रीशुक उवाच ।

अथ सिन्धुसौवीरपतेरहूगणस्य व्रजत इक्षुमत्यास्तटे तत्कुलपतिना शिबिकावाहपुरुषान्वेषणसमये दैवेनोपसादितः स द्विजवर उपलब्ध एष पीवा युवा संहननाङ्गो गोखरवद्धुरं वोढुमलमिति पूर्वविष्टिगृहीतैः सह गृहीतः प्रसभमतदर्ह उवाह शिबिकां स महानुभावः ॥ १ ॥

---

दशमे क्षिपता राज्ञा शिबिकां स्वां वहन्मुनिः ।
स्वदुर्वादानुवादेन विज्ञायाशु प्रसादितः ॥ १ ॥

एवं भूताविकारित्वमज्ञसर्वज्ञयोः समम् ।
इति सर्वज्ञतासिद्ध्यै रहूगणकथेरणम् ॥ २ ॥

( श्रीधरस्वामी )

एवं मृत्युभयासंभ्रममभिधायाथ परापरज्ञानवत्तां प्रपञ्चयितुमाह । अथेति सिन्धुसौवीरदेशयोः राज्ञ रहूगणाख्यस्य कपिलमुनिं प्रष्टुं तत्त्वामिति शेषः । तत्त्वजिज्ञासो र्व्रजतो गच्छतः सत इक्षुमत्या नद्यास्तीरे शिबिकाया आन्दोलिकाया ये वाहका वोढारस्तेषामन्वेषणसमये तेषां वाहकानां कुलस्य पत्या नाथेन स आङ्गिरससुतो द्विजश्रेष्ठो दैवादुपसादितो लब्धः पीवा पुष्टावयवः युवा संहननाङ्गः सुदृढाङ्गप्रत्यङ्गसन्धिरेष गौरिव खर इव धुरं भारं वोढुमलं समर्थ इतिधिया पूर्वं ये विष्टया बलाद्गृहीतास्तैः सहितः सन्नतदर्होऽपि स महानुभावः शिबिकामुवाह ऊढवान् ॥ १ ॥

यदा हि द्विजवरस्येषुमात्रावलोकानुगतेर्न समाहिता पुरुषगतिस्तदा विषमगतां स्वशिबिकां रहूगण उपधार्य पुरुषानधिवहत आह हे वोढारः ! साध्वतिक्रमत किमिति विषममुह्यते यानमिति ॥ २ ॥

अथ त ईश्वरवचः सोपालम्भमुपाकर्ण्योपायतुरीयाच्छङ्कितमनसस्तं विज्ञापयाम्बभूवुः ॥ ३ ॥

न वयं नरदेव ! प्रमत्ता भवन्नियमानुपथाः साध्वेव वहामः अयमधुनैव नियुक्तोऽपि न द्रुतं व्रजति नानेन सह वोढुमु ह वयं पारयाम इति ॥ ४ ॥

---

यदा हि शिबिकावहनसमये द्विजवरस्येषुमात्रप्रदेशावलोकस्यानु पश्चाद्या-गतिः कुटिला तस्या हेतुभूतायाः पुरुषाणां गतिर्न सम्यगाहिता एकरूपा नाभूत्। इषुमात्रप्रदेशगत्यवलोकनानन्तरद्विजसंबन्धिप्रतिकूलातिनिमित्तवैषम्ययुक्ता पुरुषगतिरभूदित्यर्थः । तदा विषमगतां सविषममूह्यमानां स्वशिबिकामुपधार्य दृष्ट्वा रहूगणः अधिवहतः वाहकान् पुरुषानाह उवाच । उक्तिमेवमाह । अहो इति । अहो वोढारः हे वाहकाः ! साधु सम्यगतिक्रमत पादविक्षेपान् कुरुत । किमिति किमर्थं यानं शिविका विषमं यथा तथोह्यत इति ॥ २ ॥

अथ एतदुक्त्यनन्तरं ते वोढारः सोपालम्भं साक्षेपम् ईश्वरस्य भर्तुः रहूगणस्य वच आकर्ण्य उपायेषु सामदानविधिभेदेषु यस्तुरीयश्चतुर्थः तस्माच्छङ्कितमनसः निग्रहरूपादुपायाच्छङ्कितचित्ताः अस्मान् दण्डयेदिति बुद्ध्येत्यर्थः तं याजस्य विषमगतिहेतुकं द्विजम् आङ्गिरससुतं विज्ञापयांबभूवुः विज्ञप्तिपूर्वकं कथयामासुरित्यर्थः । विज्ञप्तिपूर्वकत्वमेवाह । नेत्यादिना पारयाम इत्यन्तेन । हे नरदेव ! वयं न प्रमत्ताः किन्तु भवन्नियमानुवर्त्तिनः साध्वेव सम्यगेव वहामः, अयं पुरुषोऽधुनैव नियुक्तोऽप्यस्माभिस्सह द्रुतं नैव गच्छत्यतो वयमनेन सह वोढुं न पारयामः न समर्थाः ।

इति कृपणानां वचो निशम्य संसर्गनिमित्त एकस्यापि दोषः सर्वेषामपि भवितुमर्हति नूनमिति निश्चित्य रहूगण आहेत्यन्वयः कथम्भूत उपासिता वृद्धा येन सोऽपि स्वभावेन प्राकृतेन बलात्परवशः कृशः रजोगुणव्याप्तचित्तः कुपितमनाः

सांसर्गिको दोष एव नूनमेकस्यापि सर्वेषां सांसर्गिकाणां भवितुमर्हतीति निश्चित्य निशम्य कृपणवचो राजा रहूगण उपासितवृद्धोऽपि निसर्गेण बलात्कृत ईषदुत्थितमन्युरविस्पष्टब्रह्मतेजसं जातवेदसमिव रजसावृतमतिराह ॥ ५ ॥

अहो कष्टं भ्रातर्व्यक्तमुरुपरिश्रान्तो दीर्घमध्वानमेक एव ऊहिवान् सुचिरं नातिपीवा न संहननाङ्गो जरसा चोपद्रुतो भवान् सखे ! नो एवापर एते संघट्टिन इति बहुविप्रलब्धोऽप्यविद्यया विहितद्रव्यगुणकर्माशयस्वचरमकलेवरेऽवस्तुनि संस्थानविशेषेऽहंममेत्यनध्यारोपितमिथ्याप्रत्ययो ब्रह्मभूतस्तूष्णीं शिबिकां पूर्ववदुवाह ॥ ६ ॥

---

सन् कथंभूतं प्रत्याह न स्पष्टं ब्रह्मतेजो यस्मिन् रजसा भस्मना **आवृतं** प्रच्छन्नं **जातवेदसम**ग्निमिव स्थितम् ॥ ४—५ ॥

उक्तमेवाह । अहो इत्यादिना संघट्टिन इत्यन्तेन । अहो भ्रातरिति संबोधनमाक्षेपाभिप्रायकं **व्यक्तं** निश्चितम् **उर्वधिकं** परिश्रान्तोऽसीत्यादीनि विपरीतार्थकानि षड्वाक्यानि एक एवोहिवान । तत्रापि सुचिरं **जरसा** वृद्धत्वेन च **उपद्रुतः** दौर्बल्यं प्राप्तो भवानपर त्वद्व्यतिरिक्ता एते **संघट्टिनः** सहवाहका ते एव दीर्घाध्वगमनादिकमकृत्वैव सुखितास्तिष्ठन्तीत्येवं **बहुविप्रलब्धोऽ**धिक्षिप्तो**ऽपि** ब्राह्मणस्तूष्णीं पूर्ववदुवाह तत्रहेतुं वदन् विशिनष्टि । **अविद्यया**हङ्कारममकाररूपया-कर्मसंज्ञया **विरचिताः** परिणताः द्रव्याणि पञ्चमहाभूतानि **गुणाः** शब्दादयः ज्ञानेन्द्रियविषयाः कर्माणि वागादिकर्मेन्द्रियविषयाः अभिजल्पादयः गुणकर्मशब्दौ तदिन्द्रियाणामप्युपलक्षणा **आशयोऽ**न्तःकरणं वासना वा यस्मिन्नवस्तुनि **वस्त्येक**रूपेणेति वस्तु ततोऽन्यस्मिन्सततविकारिणीत्यर्थः अवयवविन्यासविशेषरूपे **स्वचरम-कलेवरे** तदनुबन्धिनि च अनारोपित **अहंममेत्येवंरूपो मिथ्याप्रत्ययो** ज्ञानं येन अनहमर्थे शरीरे अहंप्रत्ययः रजतादिप्रत्ययवत् मिथ्येति मिथ्याप्रत्यय **इत्युक्तम्** **ब्रह्मभूतः** ब्रह्मसाधर्म्यमापत्स्यमानः तस्य ब्रह्मभावस्य सान्निध्यात्सिद्धवन्निर्देशः ॥ ६ ॥

अथ पुनः स्वशिबिकायां विषमगतायां प्रकुपित उवाच रहूगणः किमिदमरे त्वं जीवन्मृतो मां कदर्थीकृत्य भर्तृशासनमतिचरसि प्रमत्तस्य च ते करोमि चिकित्सां दण्डपाणिरिव जनताया यथा प्रकृतिं स्वां भजिष्यस इति ॥ ७ ॥

एवं बह्वबद्धमपि भाषमाणं नरदेवाभिमानं रजसा तमसानुविद्धेन मदेन तिरस्कृताशेषभगवत्प्रियनिकेतं पण्डितमानिनं स भगवान् ब्राह्मणो ब्रह्मभूतः सर्वभूतसुहृदात्मा योगेश्वरचर्यायां नातिव्युत्पन्नमतिं स्मयमान इव विगतस्मय इदमाह ॥८॥

---

अथ पुनः शिबिकायां विषमं नीयमानायां सत्यां रहूगणः प्रकुपितः पूर्वमीषत्कुपित आह । इदानीं तु प्रकुपित आहेति प्रकुपितस्यैवोक्तिमाह । किमित्यादिना भजिष्यस इत्यन्तेन । इदं किमित्याज्ञातिलङ्घित्वं दर्शयति । अरे त्वं भवान् जीवन्नपि मृतप्रायः मां कदर्थीकृत्य तुच्छीकृत्य भर्तुर्मम शासनमतिचरस्यतिक्रम्य वर्त्तसे ततः प्रमत्तस्य ते चिकित्सां दण्डं करोमि दण्डपाणिर्यमश्च जनसमूहस्य यथा त्वं स्वां प्रकृतिं भजिस्यसे समीचीनां करिष्यसि तथा चिकित्सां करोमीति ॥ ७ ॥

एवं बह्वधिकमबद्धमनन्वितमभिभाषमाणं नराणां देवोऽहमित्यभिमानवन्तं तमसानुविद्धेनानुसक्तेन रजसा रजोगुणकार्येण क्रोधेन तन्मूलभूतमदेन सम्मोहितेन तिरस्कृताशेषभगवत्प्रियानिकेतनं भगवत्प्रियानिकेतनशब्दो भगवत्परः भगवतः प्रियनिकेतनत्वात् तिरस्कृता अशेषा भगवत्प्रिया निकेतना येन सः एतत्तिरस्कारेण सर्वेऽपि भागवतास्तिरस्कृतप्राया एतत्त्वभिप्रायेणाशेषपदं प्रयुक्तं यद्वा तिरस्कृतः अशेषः सम्पूर्णः भगवतः प्रियः आश्रयो येनेति च पण्डितमात्मानं मन्यमानं योगीश्वराणां चर्या जडादिवदाचरणं तस्यां नात्यन्तव्युत्पन्ना परिचिता मतिर्यस्य तं रहुगणं सर्वभूतसुहृदात्मा कृतागस्यपि सौहृदयुक्तमनाः ब्रह्मभूतो भगवान् जगदुत्पत्त्यादिज्ञानवान्

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥

उक्तः स ब्राह्मणः भरतः विगतस्मयो विगताश्चर्योऽपि स्मयमानो इवसिव । अनेन सुप्रसन्नता द्योत्यते इदं वक्ष्यमाणमाह ॥ ८ ॥

ब्राह्मण उवाच :—

त्वयोदितं व्यक्तमविप्रलब्धं भर्त्तुः स येन स्याद्यदि वीर ! भारः ।
गन्तुर्यदि स्यादधिगम्यमध्वा पीवेति राशौ न विदां प्रवादः ॥९॥
स्थौल्यं कार्श्यं व्याधय आधयश्च क्षुत्तृड्भयं कलिरिच्छा जरा च ।
निद्रा रतिर्मन्युरहं मदः शुचो देहेन जातस्य हि मे न सन्ति ॥१०॥
उन्मत्तमत्तजडवत्स्वसंस्थां गतस्य मे वीर ! चिकित्सितेन ।
अर्थः कियान् भवता शिक्षितेन स्तब्धप्रमत्तस्य च पिष्टपेषः ॥११॥

श्रीशुक उवाच :—

---

तत्र यदुक्तं वक्रोक्त्या त्वमुरु परिश्रान्तो दीर्घमध्वानमेक एवोहिवानित्यादि तत्रोत्तरमाह । त्वयेति । यत्त्वयोक्तं तद्व्यक्तंस्पष्टम् **विप्रलब्धं** लोकदृष्ट्या सत्यं त्वद्वचसां विपरीतार्थपरत्वेन दीर्घमार्गागमनपरिश्रमस्थौल्ययौवनाद्यभिप्राय-कत्वेन प्रवृत्तत्वात्परमार्थदृष्ट्या सत्यमेवेति भावः तदेव व्यनक्ति । भर्त्तुरिति । भर्त्तरित्यादिषु तत्रानुषङ्गेणान्वय । यदि भर्तुर्भारः तत्प्रयुक्तः श्रमश्च स्यात् स न मे स्यान्मम भरणाभावात् । यदि गन्तुरधिगन्तव्यं गन्तव्या भूमिः स्यात्स न मे अद्धा साक्षात्स्यात्साक्षाद्गमनस्याप्यभावात् पीवा पीन इति वादो **राशौ** भूतसङ्घाते देहे स्यान्न मे स्यादिति विदुषामात्मयाथात्म्यविदां प्रवाद इत्यर्थः ॥ ९ ॥

न मेत्युक्तम् प्रपञ्चयति । स्थौल्यमिति । **व्याधयः** शरीरोद्भवा रोगाः **आधयः** मनःपीडाः **भयमागामिदुःखदर्शनजं** ज्ञानं **कलिः** कलहः **इच्छा** कामः **दम्भो** वञ्चनं **रतिर्विषयासक्तिः मन्युः** क्रोधः **अहमहङ्कारः** अनात्मन्या-त्माभिमानहेतुः **मदः** मोहः । एते बाह्याकारा अन्तराकाराश्च सर्वे देहेन सहजातस्यापि मम स्वतो न सन्तीत्यर्थः । एते देहे एव न जातस्याजातस्यो-त्पत्त्यादिरहितस्य मे न सन्तीति वार्थः ॥ १० ॥

यदुक्तं प्रमत्तस्य ते चिकित्सां करोमीति तस्योत्तरमाह । उन्मत्तेति । **स्वस्मिन्** ब्रह्मात्मके स्वात्मनि **संस्थां** निष्ठां "ब्रह्मसंस्थोऽमृतत्वमेति" इति श्रुतौ संस्थाशब्दस्य निष्ठापरत्वेन प्रयोगान्निष्ठा चोपासनाया अविच्छेदनः स्वसंस्थां प्राप्तस्य उन्मत्तादीननुकुर्वतः तर्जनताडनादिपरिभवार्थिनो मम हे वीर ! **चिकित्सितेन** दण्डेन कियानर्थः त्वत्कृतं प्रहरणादिकं नानिष्टं स्यादित्यर्थः

एतावदनुवादपरिभाषया प्रत्युदीर्य मुनिवर उपशमशील उपरतानात्म्यनिमित्त उपभोगेन कर्मारब्धं व्यापनयन्राजयानमपि तथोवाह ॥ १२ ॥

स चापि पाण्डवेय ! सिन्धुसौवीरपतिस्तत्त्वजिज्ञासायां सम्यक् श्रद्धयाऽधिकृताधिकारस्तद्धृदयग्रन्थिमोचनं द्विजवच आश्रुत्य बहुयोगग्रन्थसम्मतं त्वरयाऽवरुह्य शिरसा पादमूलमुपसृतः क्षमापयन्विगतनृपदेवस्मय उवाच ॥ १३ ॥

कस्त्वं निगूढश्चरसि द्विजानां बिभर्षि सूत्रं कतमोऽवधूतः ।
कस्यासि कुतत्य इहापि कस्मात् क्षेमाय नश्चेदसि नोत शुक्लः ॥ १४ ॥

---

यदि पुनरहं न स्वसंस्थां गतः किन्तु प्रमत्तसंसार्येव तथापि स्तब्धस्य प्रमत्तस्य मम शिक्षादिकं पिष्टपेषणवद्व्यर्थमेव । ज्ञानरहिते मादृशे संसारिजेन यत्त्वया चिकित्सितं दण्डप्रदानं तत् पिष्टपेषो निष्फलः पूर्वमेव संसारव्यसनातुरत्वाद् इत्यर्थः ॥ ११ ॥

अनुवादपरिभाषयानुवादरूपभाषणपूर्वकम् **एतावत्प्रत्युदीर्य** प्रतिवचनं कृत्वा **उपशमः** अक्रोधादिरेव शीलं यस्य उपरतं निरस्तमनात्मनो देहान्तरस्य निमित्तं येन सः **विद्याया** निरस्तदेहान्तरसम्बन्धापादकपूर्वोक्तसञ्चितानभ्युपागत-प्रामादिकबुद्धिपूर्वकभेदभिन्नपुण्यापुण्यरूपपापः आरब्धमभ्युपगतप्रारब्धरूपमपि कर्म पुण्यापुण्यरूपम् **उपभोगेना**नुभवेन उपनयन् स मुनिवरः तत्तयैव पूर्ववद्राजयानम-प्यूढवान् ॥ १२ ॥

हे **पाण्डवेय !** स चापि सिन्धुसौवीरपती रहूगणोऽपि सम्यक् या श्रद्धा तयैव तत्त्वविजिज्ञासायामधिकृतः प्राप्तोऽधिकारभावो येन **अधिकारः** प्रस्तावः आरम्भ इति यावत् तत्त्वजिज्ञासायां कृतारम्भ इत्यर्थः । अज्ञानविमोचनं **बहुयोग-ग्रन्थसम्मतं** बहुविधाध्यात्मशास्त्रसम्मतं च द्विजवच आश्रुत्य श्रुत्वा विगतो **नराणां देवो**ऽधिराज इति **स्मयो** गर्वो यस्य सः शिबिकायास्त्वरयावरुह्या-वतीर्य तत्पादमूलमुपसृतः द्विजपादमूलं प्रति प्रणतः क्षमापयन् वक्ष्यमाणमुवाच ॥१३॥

तदेवाह । द्विजाणां मध्ये त्वं कतमः **निगूढः** अनभिव्यक्तब्रह्मवर्चसः चरसि नाहं द्विज इति चेन्न यतः । सूत्रमुपवीतम् बिभर्षि अतस्त्वमवधूतः सर्वैः

तद्ब्रूह्यसङ्गो जडवन्निगूढविज्ञानवीर्यो विचरस्यपारः ।
वचांसि योगग्रथितानि साधो ! न नः क्षमन्ते मनसाऽपि भेत्तुम् ॥१५॥
तन्मे भवान्नरदेवाभिमानमदेन तुच्छीकृतसत्तमस्य ।
कृषीष्ट मैत्रीदृशमार्त्तबन्धो ! यथा तरे सदवध्यानमंहः ॥ १६ ॥
न विक्रिया विश्वसुहृत्सखस्य साम्येन वीताभिमतेस्तवापि ।
महद्विमानात्स्वकृताद्धि मादृङ्नङ्क्ष्यत्यदूरादपि शूलपाणिः ॥१७॥

---

परिभाव्यवेषो ज्ञाननिष्ठः कस्य पितुर्गुरोर्वा असि पुत्रः शिष्यो वासि कुल भवः इहापि कस्माद्धेतोः प्राप्तः **नोऽस्माकं** क्षेमाय चेत्प्राप्तः किं **शुक्लः** कपिलो मुनिर्भवासि किम् इतेति वितर्के ॥ १४ ॥

तस्मान्मत्प्रश्नानामुत्तरं ब्रूहि **असङ्गो** निष्परिग्रहः निगूढं पिहितं विज्ञानरूपं वीर्यं प्रभावो येन अपारः दुर्विभाव्याभिप्रायः जडवद्विचरसि तत्र वचांसि तु योगशास्त्रेण सन्दर्भितानि । तत्र हेतुः हे साधो ! **नोऽस्माकं** मनसापि साक्षाद्दृष्ट्यापि त्वद्वचो भेत्तुमाभिप्रायतोऽवगन्तुं न **क्षमं** न शक्यम् ॥ १५ ॥

तस्मादेवं जिज्ञासुत्वाद्धे आर्त्तबन्धो ! नरदेवोऽहमित्यभिमानजमदेनादृतसज्जनस्य **मे** मह्यं **मैत्रीदृशं** स्नेहयुक्तां दृष्टिं **कृषीष्ट** कुरु यया दृशा सदवज्ञानं सतामवज्ञानरूपमंहः पापं तरे **तरिष्यामि** ॥ १६ ॥

ननु ममावज्ञाकृतविकाराभावात्कुतः पापं तत्राह । नेति । विश्वसुहृदीश्वरः सखा यस्य स विश्वसुहृत्सखा "द्वा सुपर्णा सयुजा सखाया" इति श्रुतेः तस्य साम्येन सर्वस्य ब्रह्मात्मकत्वभावेन **वीता** निरस्ताऽभिमतिर्देहात्माभिमतिः स्वतन्त्रत्वस्वाभिमतिश्च, यस्य तव यद्यपि मत्कृतादवज्ञानाद्विकारो नास्ति तथापि महतामवमानात्स्वकृतान्मादृशो जन्तुः शूलपाणिरिवातिसमर्थोऽप्यदूरात् क्षिप्रं **नङ्क्ष्यति** स्थावरतामेष्यति स्थावरताप्राप्तिरेव हि जीवस्य विनाशो नाम तत्र नितरां चैतन्यानभिव्यक्तेः ॥ १७ ॥

ब्राह्मण उवाच :—

गुणानुरक्तं व्यसनाय जन्तोः क्षेमाय नैर्गुण्यमथो मनः स्यात् ।
यथा प्रदीपो घृतवर्त्तिमश्नन् शिखाः सधूमा भजति ह्यन्यदा स्वम् ।
पदं तथा गुणकर्मानुबद्धं वृत्तीर्मनः श्रयतेऽन्यत्र तत्त्वम् ॥१८॥
क्षेत्रज्ञ आत्मा पुरुषः पुराणः साक्षात्स्वयंज्योतिरजः परेशः ।
नारायणो भगवान् वासुदेवः स्वमाययाऽत्मन्यवधीयमानः ॥१९॥
यथानिलः स्थावरजङ्गमानामात्मस्वरूपेण निविष्ट ईशेत् ।
एवं परो भगवान् वासुदेवः क्षेत्रज्ञ आत्मेदमनुप्रविष्टः ॥२०॥

---

गुणानुरक्तमिति । गुणशब्दस्त्रिगुणपरः त्रिगुणानुरक्तं मनः जन्तोः व्यसनाय संसाराय नैर्गुण्यममलं मनस्तु क्षेमाय मुक्तये स्यादित्यर्थः । निर्गतं गुणान्निर्गुणं तदेव नैर्गुण्यम् चातुर्वर्ण्यादेराकृतिगणत्वात्स्वार्थे ष्यञ् । मनसो मलिनत्वे विमलत्वे च दृष्टान्तमाह । यथेति । घृतवर्त्ति घृतावसिक्तां वर्तिमश्नन् प्राप्नुवन् सधूमां शिखां भजति अन्यदा घृतानवासिक्तवर्तिगतः स्वं परं रूपं धूमानाविलं भजति तथा गुणकर्मानुबद्धं गुणानुसारिभिः पुण्यापुण्यकर्मभिः कलुषितं मनः प्रदीपस्थानीयं शिखास्थानीया धूमतुल्या रागद्वेषाद्यावृता वृत्तीर्भजते अन्यत्र गुणत्रयेणाकालुष्ये सति तत्त्वं स्वस्वभावं सत्त्वप्राचुर्यं श्रयते प्राप्नोति । यद्वा तत्त्वं श्रयते तत्त्वावभासस्तदा स्यादित्यर्थः ॥ १८ ॥

क्षेत्रज्ञो द्विविधः । त्वं पदार्थो जीवः तत्पदार्थ ईश्वरश्च ।

क्षेत्रज्ञ आत्मा व्यापी । पुराणो जगत्कारणभूतः । पुरुषः पूर्णः साक्षादपरोक्षः । स च स्वयंज्योतिः नतु ज्ञानस्य विषयत्वेनाश्रयत्वेन वा परोक्षः अजो जन्मादिशून्यः परेशां ब्रह्मादीनामपि ईशः । नारं जीवसमूहः सोऽयनं यस्य नियन्तुः भगवानैश्वर्यादिषड्गुणवान् । वासुदेवः सर्वभूतानामाश्रयः स्वाधीनया माययात्मनि जीवेऽवधीयमानोऽवस्थाप्यमानः । कर्मकर्त्तरि प्रयोगः । तन्नियन्तृत्वेन वर्त्तमान इत्यर्थः ॥ १९ ॥

न प्रकृतिवशगैर्दुर्दर्शत्वमात्रेणः सर्वव्यापकत्वं भगवतः किन्तु वायुवद्दृश्य एव सर्वव्यापकतया नियमयतीत्याह । यथेति । यथानिलो वायुरात्मस्वरूपेण चराचर-

न यावदेतां तनुभृन्नरेन्द्र ! विधूय मायां वयुनोदयेन ।
विमुक्तसङ्गो जितषट्सपत्नो वेदात्मतत्त्वं भ्रमतीह तावत् ॥२१॥
ज्ञानं विशुद्धं परमार्थमेकमनन्तरं त्वबहिर्ब्रह्म सत्यम् ।
प्रत्यक्प्रशान्तं भगवच्छब्दसंज्ञं यद्वासुदेवं कवयो वदन्ति ॥२२॥
रहूगणैतत्तपसा न याति न चेज्यया निर्वपणाद्गृहाद्वा ।
न च्छन्दसा नैव जलाग्निसूर्यैर्विना महत्पादरजोऽभिषेकम् ॥२३॥

---

भूतानामन्तः प्रविष्ट ईष्टे प्रेरयति। एवं क्षेत्रज्ञः परमात्मा भगवान् वासुदेवोऽपीदं जगच्चेतनाचेतनात्मकमन्तर्नियन्तृतया प्रविष्टः। भगवतो व्याप्तिद्वारा प्रेरकतया चेत्यनिर्दिष्टान्तः ततः सिद्धः ॥ २० ॥ ( राघवाचार्य )

एवं प्रकृतिपुरुषविलक्षणं परमात्मस्वरूपमुद्दिश्य तदुपासनया तत्साक्षात्कारापन्न-ज्ञानपर्यन्तं संसारो न निवर्तत इत्याह ।

नेति । हे नरेन्द्र ! रहुगण ! तनुभृद्देही **वयुनोदयेन** ज्ञानोदयेन यावदेतां **माया**महंममाभिमानरूपां **विधूय** निरस्य विमुक्तः सङ्गो देहगेहादिषु येन जिताः **षट्सपत्नाः** शत्रवो मनसा सह इन्द्रियरूपाः येन सह तथाभूतः सन्नात्म**महनः** परमात्मनः **तत्त्वं** याथात्म्यं न वेद तावदिह संसारे भ्रमति ॥ २१ ॥
( राघवाचार्य )

तर्हि किं सत्यं तदाह । ज्ञानं सत्यं व्यावहारिकसत्यत्वं व्यावर्त्तयति **परमार्थम्** वृत्तिज्ञानव्यवच्छेदार्थानि षड्विशेषणानि विशुद्धं तत्त्वाविद्यकम् । **एकं** तत्तु नानारूपम् अनन्तरं त्वबहिर्बाह्याभ्यन्तरशून्यं तत्त विपरीतम् । **ब्रह्म** परिपूर्णं तत्तु परिच्छिन्नम् । **प्रत्यक्** स्वस्मै भासमानं तत्तु विषयाकारम् । **प्रशान्तं** निर्विकारकम् तदेवं स्वरूपज्ञानं सत्यमित्युक्तम् । कीदृशं तत् । ऐश्वर्यादिषड्-गुणत्वेन भगवच्छब्दः संज्ञा यस्य यच्च ज्ञानं वासुदेवं वदन्ति ( कवयः आत्मया-थात्म्यविदः इति राघवः ) ॥ २२ ॥ ( श्रीधराचार्य )

हे रहुगणै**तदात्म**परमात्मयाथात्म्यज्ञानं **महतां** भागवतानां पादरजः सेवां विना तप आदिभिः स्वमनीषापूर्वकैर्न **याति** न प्राप्नोति। तत्र **तपः**

यत्रोत्तमश्लोकगुणानुवादः प्रस्तूयते ग्राम्यकथाविघातः ।
निषेव्यमाणोऽनुदिनं मुमुक्षोर्मतिं सतीं यच्छति वासुदेवे ॥२४॥
अहं पुरा भरतो नाम राजा विमुक्तदृष्टश्रुतसङ्गबन्धः ।
आराधनं भगवत ईहमानो मृगोऽभवं मृगसङ्गाद्धतार्थः ॥२५॥
सा मां स्मृतिर्मृगदेहेऽपि वीर ! कृष्णार्चनप्रभवा नो जहाति ।
अथो अहं जनसङ्गादसङ्गो विशङ्कमानोऽविवृतश्चरामि ॥२६॥

---

कृच्छ्रचान्द्रायणादिरनशनादिर्वा इज्या वैदिकं कर्म निर्वपणं सत्पात्रनिःक्षेपरूपं दानं गृहं गृहस्थधर्मः ( तन्निमित्तपरोपकारः इति श्रीधरविश्वनाथौ ) छन्दो वेदाभ्यासः एभिस्तप आदिभिस्तथोपासितजलादिभिश्च न यातीत्यर्थः ॥२३॥ (राघव)

कथं महत्सेवया तद्यातीत्यत्राह । यत्र येषु महत्सु ग्राम्यकथानामविघातो यस्मात्स उत्तमश्लोकस्य भगवतो गुणानुवादः प्रस्तूयते प्रस्तूयतां गुणानुवादः प्रकृते किमायातं तत्राह । अनुदिनं निषेव्यमाणो गुणानुवादः वासुदेवे सतीं मतिं मुमुक्षोर्यच्छति स्वात्मपरमात्मयाथात्म्यविषयं ज्ञानं सम्पादयति इत्यर्थः ॥ २४ ॥

एवं गृहमाश्रितस्यैवं वैराग्यस्य ज्ञानहेतुत्वमभिधाय विषयसङ्गस्य ज्ञानभ्रंशकरत्वं स्वदृष्टान्तेन वदन् कस्त्वं निगूढ इत्यादिप्रश्नस्योत्तरमाह । अहमिति द्वाभ्याम् । पुरा पूर्वतरास्मिन् जन्मनि अहं भरतो नाम प्रसिद्धः राजाऽभूवं तत्र विशेषेण व्यक्तः दृष्टेष्वैहिकसुखेषु श्रुतेष्वामुष्यकेषु स्वर्गादिषु च सङ्गरूपो बन्धो येन तथाभूतः सन् भगवत आराधनं कुर्वाणस्तत्र मृगसङ्गाद्धतः विहतः आराधनलक्षणोऽर्थो यस्य तथाभूतो मृगोऽभवं मृगजन्मप्राप्तोऽभूवम् ॥ २५ ॥

हे वीर ! कृष्णार्चनप्रभावाद्भगवदाराधनजा सा भगवद्विषया स्मृतिः मृगदेहेऽपि मां न जहाति नात्याक्षीत् कृष्णार्चनप्रभावविषयको विस्मय अहो इति अधुना जनसङ्गाद्विशङ्कमानः अत एवासङ्गः अविवृतः अप्रकटः गृहायप्रविष्टश्चरामि ॥ २६ ॥

तस्मान्नरोऽसङ्गसुसङ्गजातज्ञानासिनेहैव विवृक्णमोहः ।
हरिं तदीहाकथनस्मृतिभ्यां लब्धस्मृतिर्यात्यतिपारमध्वनः ॥२७॥

रहूगण ! त्वमपि ह्यध्वनोऽस्य संन्यस्तदण्डः कृतभूतमैत्रः ।
असज्जितात्मा हरिसेवया शितं ज्ञानासिमादाय तरातिपारम् ॥२८॥

राजोवाच—

अहो नृजन्माखिलजन्मशोभनं किं जन्मभिस्त्वपरैरप्यमुष्मिन् ।
न यद्धृषीकेशयशःकृतात्मनां महात्मनां वः प्रचुरः समागमः ॥२९॥

---

तस्मात्सङ्गस्य बन्धकत्वान्नरः असङ्गेषु ज्ञानिषु सङ्गेन जातो यः ज्ञानरूपोऽसिः खड्गस्तेन विशेषेण वृक्णश्छिन्नः सङ्गो देहतदनुबन्धिषु येन तथाभूतः सन्नध्वनः संसाराटव्यध्वनः पारमत्यन्तमवधिं हरिं भगवन्तं तदीहाकथनश्रुताभ्यां भगवच्चेष्टितकथनश्रवणाभ्यां कथनादिप्रणाल्येत्यर्थः लब्धा स्मृतिर्भगवद्विषया यस्य स याति प्राप्नोति ॥ २७ ॥

तस्मात् हे रहूगण ! त्वमपि परित्यक्तः भूतदण्डो येन, कृतं भूतेषु मैत्रं येन असज्जितः विषयेष्वनभिनिवेशितः आत्मा येन तथाभूतः सन् हरिसेवया निशितः । सेवाऽत्र वर्णाश्रमधर्मैर्भगवदाराधनरूपा तथा निशितं ज्ञानं भगवदुपासनात्मकं तदेवासिः खड्गस्तमादाय प्रकृतितरुच्छेदनायेति भावः यथा "अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा", इति अस्याध्वनः पारं वैष्णवं पदं प्रति अतितर, अध्वनः पारमसि ज्ञात्वा, असेर्विशेषणं वा संसाराध्वनो निस्तरणोपायभूतं ज्ञानासिमादाय संसारमुक्तोऽभवेत्यर्थः ॥२८॥

एवमुपदिष्टतत्त्वलययाथार्थ्यबन्धमोक्षहेतुः संसारासारत्वोपदेशेन उत्पन्नवैराग्यो रहूगणः स्वात्मनः कृतार्थतामाविः कुर्वन् तत्सङ्गतिं त्वदुक्तीश्चाभिनन्दन्नमस्करोति त्रिभिः श्लोकैः अहो इति । अहो नृजन्म मनुष्यजन्म सुशोभनं परममुष्मिन्परलोकेऽपरैर्देवादिजन्मभिरपि किं प्रयोजनं येषु देवादिजन्मसु हृषीकेशस्य भगवतो यशसा कृतः शोधित आत्मा चित्तं येषां तेषां महात्मनां त्वादृशानां समागमः प्रचुरो न भवति भागवतसङ्गविरहितैर्देवादिजन्मभिरपि किं व्यर्थान्येव तानीत्यर्थः ॥२९॥

न ह्यद्भुतं त्वच्चरणाब्जरेणुभिर्हतांहसो भक्तिरधोक्षजे ऽमला ।
मौहूर्त्तिकाद्यस्य समागमाच्च मे दुस्तर्कमूलोऽपहतोऽविवेकः ॥३०॥

नमो महद्भ्योऽस्तु नमः शिशुभ्यो नमो युवभ्यो नम आवटुभ्यः ।
ये ब्राह्मणा गामवधूतलिङ्गाश्चरन्ति तेभ्यः शिवमस्तु राज्ञाम् ॥ ३१ ॥

श्रीशुक उवाच—

इत्येवमुत्तरामातः ! स ब्रह्मर्षिसुतः सिन्धुपतय आत्मसतत्त्वं विगणयतः परानुभावः परमकारुणिकतयोपदिश्य रहूगणेन सकरुणमभिवन्दितचरण आपूर्णार्णव इव निभृतकरणोर्म्याशयो धरणिमिमां विचचार ॥ ३२ ॥

---

निरन्तरं त्वादृशानामुपासितयोश्चरणाब्जयो रेणुभिर्हतमंहः पापं यस्य तस्याधोक्षजे ऽमला भक्तिर्भवतीति नैषाद्भुतं कुतः यस्य तव मौहूर्त्तिकान्मुहूर्त्तमात्रभवात्समागममात्रान्मे दुस्तर्केण बद्धमूलोऽविवेकोऽपहतः विनष्टो ऽभवत् ॥३०॥

ज्ञानिनः केन रूपेण चरन्तीत्यज्ञानात्स सर्वान्नमस्करोति । नम इति । महद्भ्यो नमः । तत्रापि शिशुरूपेभ्यो नमः ये युवानस्त्वादृशास्तेभ्योऽपि नमः । आवटुभ्यो वटुपर्यन्तेभ्यः वटुर्माणवकः वटुवत्स्वमहात्म्यानाविष्करणशीलपर्यन्तेभ्यः इत्यर्थः ज्ञानिनो हि स्वमाहात्म्यानाविष्कारेण तिष्ठन्ति "तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेदिति" श्रुतेः । पाण्डित्यं नाम ज्ञाननिष्ठां निर्विद्य बाल्येन तिष्ठासेदित्यर्थं । ये त्वादृशा ब्राह्मणा अवधूतवेषाः गां भूमिं चरन्ति तेभ्यः सकाशाद्राज्ञां यादृशानां कृतागसां शिवमस्तु महतां निग्रहो माभूत् ॥ ३१ ॥

संवादमुपसंहरति शुकः हे उत्तरामातः ! उत्तरा माता यस्य सः उत्तरमाता परीक्षित्तस्येदं संबोधनमुत्तरामातरिति । अविगणयते न विगणयत इत्यविगणयन् तस्मै अवमानं कुर्वाणाय सिन्धुसौवीरपतये रहूगणायाविगणितः परिच्छेत्तुमशक्यः परमानुभावः प्रभावो यस्य स स वै ब्रह्मर्षिसुतः परमकारुणिकत्वेन हेतुना आत्मनस्तत्त्वं प्रकृतिविलक्षणब्रह्मात्मकत्वविशुद्धज्ञानानन्दस्वप्रकृतशान्तत्वादियाथात्म्यमुपदिश्य सकरुणं सस्नेहं यथा भवति तथा रहूगणेनाभिवन्दितौ चरणौ पादौ यस्य सः आसमन्तात्पूर्णः समुद्र इव निभृतानि शान्तानि करणानि इन्द्रियाणि

सौवीरपतिरपि सुजनसमवगतपरमात्मसतत्त्व आत्मन्यविद्याऽध्यारोपितां च देहात्ममतिं विससर्ज एवं हि नृप! भगवदाश्रिताश्रितानुभावः ॥ ३३ ॥

तस्येदमुपगायन्ति ।

आर्षभस्येह राजर्षेर्मनसाऽपि महात्मनः ।
नानुवर्त्माऽर्हति नृपो मक्षिकेव गरुत्मतः ॥ ३४ ॥

यो दुस्त्यजान् दारसुतान् सुहृद्राज्यं हृदिस्पृशः ।
जहौ युवैव मलवदुत्तमश्लोकलालसः ॥ ३५ ॥

---

ऊर्मयः अशनायादयः **आशयोऽन्तः**करणं वासना वा यस्य सः इमां **धरणिं** भूमिं विचचार ॥ ३२ ॥

सौवीरपतिः रहूगणोऽपि सुजनाद्ब्रह्मर्षिसुतात्सम्यगवगत परमात्मनस्तत्त्वं याथात्म्यं येन तथाभूतः सन् तदानीमेवात्मन्यविद्ययाज्ञानेनारोपितां देहात्ममतिं **विससर्ज** जहौ हे नृप! भगवदाश्रिता भागवतास्तानाश्रिता भगवद्दासानुदासास्तेषां प्रभाव एवंविधो हि भवतीत्यर्थः ॥ ३३ ॥

अवधूतमाहात्म्यप्रतिपादकान् श्लोकानवतारयति । तस्येदं माहात्म्यमार्षभस्य ऋषभपुत्रस्य **महात्मनो** महानुभावस्य राजर्षेर्वर्त्म मार्गं मनसाप्यनु अनुसर्त्तमन्यो नृपो नार्हति यथा गरुडस्य गतिं मक्षिकेत्यर्थः ॥ ३४ ॥

तत्रैव हेतुमाह । स आर्षभो राजर्षिः स्वाधीनः स्ववशः मनोज्ञानत एव **दुस्त्यजान्** दुःखेनापि त्यक्तुमशक्यान् पुत्रान् सुहृद्राज्ययोर्द्वन्द्वैश्वर्यं युवैव सन्मलवद्विष्ठामिव **जहौ** अत्याक्षीत् । त्यागे हेतुमाह । उत्तमश्लोके **भगवति लालसः** लम्पटः आसक्तचित्त इति यावत् ॥ ३५ ॥

यो दुस्त्यजान् क्षितिसुतस्वजनार्थदारान्
प्रार्थ्यां श्रियं सुरवरैः सदयावलोकाम् ।
नैच्छन्नृपस्तदुचितं महतां मधुद्विड्-
सेवानुरक्तमनसामभवोऽपि फल्गुः ॥ ३६ ॥

यज्ञाय धर्मपतये विधिनैपुणाय
योगाय सांख्यशिरसे प्रकृतीश्वराय ।
नारायणाय हरये नम इत्युदारं
हास्यन् मृगत्वमपि यः समुदाजहार ॥ ३७ ॥

---

न केवलमत्याक्षीदेवापि तु नैच्छदित्याह । य इति । यो नृप आर्षभः दुस्त्यजान् **क्षिति**र्भारतं वर्षं **सुताः** पुत्रा **अर्थं** धनं **दाराः** स्त्रियः इमान् सुरवरैरिन्द्रादिभिश्च प्रार्थ्यां श्रियं सम्पदं कथम्भूतां सदयावलोको सदयया युक्तः अवलोको राज्ञो यस्यां तां राज्ञो दयया युक्तोऽवलोको मयि प्रसरत्विति प्रार्थ्यमानामिति भावः नैच्छत् क्षित्यादिषु रागमपि नाकरोदित्यर्थः नैतच्चित्रं किन्तु युक्तं चैतदित्याह । तदुचितमिति । कुतः यतो मधुद्विषः सेवायामनुरक्तमनसां महताम**भवो** मोक्षोऽपि **फल्गु**रल्पः भगवत्सेवापेक्षया मोक्षोऽप्यल्प इत्यर्थः ॥ ३६ ॥

तस्य मधुद्विट्सेवानुरागातिशयमेवाह । यज्ञायेति । यज्ञानां भोक्त्रे प्रभवे च धर्मपतये ऽवतारैर्वर्णाश्रमधर्माणां गोप्त्रे विधिनैपुणाय धर्मानुवर्त्तिनां रक्षाविधौ नैपुण्ययुक्ताय साङ्ख्यमात्मानात्मविवेकात्मको ऽध्यात्मयोगः स एव **शिरः** शिरोवत्प्रधानाङ्गं यस्य तस्मै योगाय विवेकादिसाधनसप्तकानुगृहीतभक्तियोगगम्याय योगशब्दस्तद्गम्ये औपचारिकः प्रकृतीश्वराय मायानियन्त्रे **नारं** जीवसमूहः **अयन**माश्रयो यस्य तस्मै अनेन चिदचिच्छरीरकत्वमुक्तं हरये आश्रितबन्धहराय नम इत्युदारं भृशमुदा**जहार** उदाहृतवान् । किं कर्त्तुमिच्छन् मृगजन्मनो वैकल्यदशायां समुदाहरणमत्र विवक्षितमन्यथा चरमदशायामुक्तनामग्रहणे तद्देहावसाने मुक्तेरस्मिन् प्रबन्धे बहुषु स्थलेषूक्तत्वेन पूर्वापरग्रन्थविरोधापत्तेः उदाहरणं चात्रव्यक्तोच्चारणं विवक्षितं मृगजन्मनस्तस्य व्यक्तोच्चारणासम्भवादन्यथा साङ्ख्यभक्तियोगोपसंहारापत्त्या जन्मान्तरविकल्पनायोगापत्तेः ॥ ३७ ॥

य इदं भागवतसभाजितावदातगुणकर्मणो राजर्षेर्भरतस्यानुचरितं स्वस्त्ययनमायुष्यं धन्यं यशस्यं स्वर्ग्यापवर्ग्यं वाऽनुशृणोत्याख्यास्यत्यभिनन्दति च सर्वा एवाशिष आत्मन आशास्ते न काञ्चन परत इति ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां
संहितायां वैयासिक्यां भरतोपाख्यानं
समाप्तम् ॥



---

एतद्भरतचरितश्रवणादिफलमाह । य इदमिति । भागवतैः **सभाजिताः** संस्तुता **अवदाताः** शुद्धा गुणा अक्रोधादयः कर्माणि भूतहिताचरणादिरूपाणि च यस्य तस्य राजर्षेर्भरतस्यानुचरितं यशस्यं स्वस्त्ययनं मङ्गलावहमायुष्करं **धन्यं** धनप्रापकं **स्वर्ग्यं** स्वर्गसाधनमा**पवर्ग्यं** मुक्तिसाधनं च योऽनुशृणोत्याख्यास्यति कथयति चाभिनन्दति अनुमोदते च स आत्मनः स्वतः एव सर्वाश्चाशिषः समीहितान्याशास्ते प्राप्नोति न तु काञ्चिदप्याशिषं परस्मादपेक्षते इत्यर्थः । चरितस्य स्वस्त्ययनादिकं च न स्वरूपेणापि तु श्रवणादिविषयत्वेनेति ख्यापनाय शृणोत्याख्यास्यतीत्युक्तं न केवलं स्वस्त्ययनादिकमेवास्य फलमपित्वनुक्त मन्यत्सर्वमपीत्याभिप्रायेणोक्तं न केवलं स्वस्त्ययनादिकमेवास्य फलमपि त्वनुक्तमन्यत्सर्वमपीत्यभिप्रायेणोक्तं सर्वा एवाशिष आत्मन आशास्ते इत्यादि ॥ ३८ ॥

इति श्रीमद्भागवते महापुराणे पञ्चमस्कन्धे पारमहंस्यां
संहितायां श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
भरतोपाख्यानम् समाप्तम् ॥



# राजवाहनचरितम् ।

## ( दशकुमारचरिते प्रथमोच्छ्वासः )

श्रुत्वा तु भुवनवृत्तान्तमुत्तमाङ्गना विस्मयविकसिताक्षी सस्मितमिदमभाषत-'दयित,त्वत्प्रसादादद्य मे चरितार्था श्रोत्रवृत्तिः। अद्य मे मनसि तमोपहस्त्वया दत्तो ज्ञानप्रदीपः। पक्वमिदानीं त्वत्पादपद्मपरिचर्याफलम्।

---

### पदचन्द्रिका

श्रुत्वेति। भुवनवृत्तान्तं चतुर्दशभुवनवृत्तान्तम्। प्रकरणे पातालवृत्तान्तमित्यप्यर्थः, 'विष्टपं भुवनं जगत्' इत्यमरः। 'वार्ता प्रवृत्तिर्वृत्तान्तः' इत्यपि। उत्तमाङ्गना नायिका, 'स्त्री योषिदबला—'इत्युपक्रम्य 'विशेषास्त्वङ्गना भीरुः इत्यमरः। विस्मयेन विकसिते अक्षिणी लोचने यस्याः सेति। 'विस्मयोऽद्भुतमाश्चर्यम्, इत्यमरः।

अस्य च त्वत्प्रसादस्य किमुपकृत्य प्रत्युपकृतवती भवेयम्। अभवदीयं हि नैव किञ्चिन्मत्संबद्धम्। सुप्तयोस्तु तयोः स्वप्ने बिसगुणनिगडितपादो जरठः कश्चिज्जालपादोऽदृश्यत। प्रत्यबुध्येतां चोभौ। अथ तस्य राजकुमारस्य कमलमूढशशिकिरणरज्जुदामनिगृहीतामिव रजतशृङ्खलोपगूढं चरणयुगलमासीत्। उपलभ्यैव च 'किमेतत्' इत्यतिपरित्रासविह्वला मुक्तकण्ठमाचक्रन्द राजकन्या। येन च तत्सकलमेव कन्यान्तःपुरमग्निपरीतमिव पिशाचोपहतमिव वेपमानमनिरूप्यमाणतदात्वायतिविभागमगण्यमानरहस्यरक्षासमयमवनितलविप्रविध्यमा-

---

'लोचनं नयन नेत्रमीक्षणं चक्षुरक्षिणी' इत्यमरः। सस्मितमिति क्रियाविशेषणम्। सहासमित्यर्थः। 'स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक्स्मितम्' इत्यमरः। इदं वक्ष्यमाणम्। अभाषत। 'भाष व्यक्तायां वाचि' इति। लङ्यात्मनेपदम्। तदेवाह—**दयितेति**। चरितार्थौ। सफलेत्यर्थः। तमोपहोऽज्ञानहन्ता। 'अज्ञानान्धकारयोस्तमसी' इति महीपः। पक्वं परिणतम्। परिचर्योपासना। 'परिचर्याप्युपासना' इत्यमरः किमुपकृत्य। कमुपकारं कृत्वेत्यर्थः। प्रत्युपकृतवती। कृतप्रत्युपकारेत्यर्थः। भवेयमिति 'भू सत्तायाम्' विधिलिङ्। उत्तमपरस्मैपदैकवचनम्। अभवदीयम् न भवदीयमेवेत्यर्थः। मत्संबद्धम्। मदीयमेवेत्यर्थः ममैव भवदीयत्वादिति भावः।

निगडितः 'तदस्य संजातं—' इतीतच्। जरठो वृद्धः। जालपादो हंसः जरठग्रहणमशुभसूचकम्। 'जालपादः श्वेतगरुच्चक्राङ्गो मानसप्रियः' इति वैजयन्ती। **अदृश्यतेति**। ताभ्यामर्थादध्याहार्यम्। **अथेति**। कमलमूढः कमलत्वेन भ्रान्तो यः शशी तस्य किरणरज्जुदाम समुदायस्तेन निगृहीतमिव। मुक्तकण्ठमुच्चैः स्वरम्। 'स्वरः कण्ठः प्रकीर्तितः' इति रत्नकोशः। आचक्रन्द। 'कदि क्रदि क्लदि आह्वाने रोदने च' इति भ्वादेर्धातोराङ्पूर्वस्य लिटि परस्मैपदे रूपम्। **येन चेति**। 'तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः' इत्यमरः। विभागः कृत्यम्। 'कृत्यांशयोर्विभागः स्यात्' इत्यजयः। रहस्यमेकान्तोद्भूतम्। 'आ-

नगात्रमाक्रन्दाविदीर्यमाणकण्ठमश्रुस्रोतोऽवगुण्ठितकपोलतलमाकुलीबभूव । तुमुले चास्मिन्समयेऽनियन्त्रितप्रवेशाः 'किं किम्' इति सहसोपसृत्य विविशुरन्तर्वंशिकाः पुरुषाः । ददृशुश्च तदवस्थं राजकुमारम् । तदनुभावनिरुद्धनिग्रहेच्छास्तु सद्य एव ते तमर्थं चण्डवर्मणे निवेदयाञ्चक्रुः । सोऽपि कोपादागत्य निर्दहन्निव दहनगर्भया दृशा निशाम्योत्पन्नप्रत्यभिज्ञः 'कथं स एवैष मदनुजमरणनिमित्तभूतायाः पापाया बालचन्द्रिकायाः पत्युरत्यभिनिविष्टवित्तदर्पस्य वैदेशिकवणिक्पुत्रस्य पुष्पोद्भवस्य मित्रं रूपमत्तः कलाभिमानी नैकविधविप्रलम्भोपायपाटवावर्जितमूढपौरजनमिथ्यारोपितवितथदेवतानुभावः कपटधर्मकञ्चुको निगूढपापशीलश्चपलो ब्राह्मणब्रुवः । कथमिवैनमनुरक्ता

---

क्रन्दं रोदनं मतम्' । अश्रूणां स्रोतः प्रवाहः इति । 'स्रोतोऽम्बुसरणं स्वतः इत्यमरः ।

अवगुण्ठितं वेष्टितम् । तुमुले संकुले । अनियन्त्रितप्रवेशा अनिवारितप्रवेशाः । अन्तर्वंशिकाः । 'अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः' इत्यमरः । तवदस्थम् । निगडितपादमित्यर्थः । ददृशुः । 'दृशिर् प्रेक्षणे' । लिट् प्रथमपुरुषपरस्मैपदबहुवचनम् । तस्य राजकुमारस्यानुभावेन सामर्थ्येन । 'अनुभावः प्रभावे च निश्चयभावसूचके' इति वैजयन्ती । निरुद्धा निग्रहेच्छा येषां ते । अन्तर्वंशिका इत्यर्थः । निवेदयांचक्रुः । सोऽपीति । सोऽपि चण्डवर्मेत्यर्थः । दहनगर्भयाग्निगर्भया । निशाम्य । 'शम लक्ष आलोचने' । अस्मात्स्वार्थण्यन्तात्क्त्वाप्रत्यये समासे ल्यप् । दृष्ट्वेत्यर्थः । नैकविधा अनेकविधा ये विप्रलम्भोपायास्तेषु यत्पाटवं पटोर्भावस्तेनआवर्जिता वशीकृतो मूढो यः पौरजनस्तेन मिथ्यारोपितो वितथो निष्फलो देवतानुभावो यस्मिन्निति । कपटमेव धर्मकञ्चुकं यस्येति । निगूढं गुप्तम् । सावमाना हेलनापरा । 'पापाणके ब्राह्मणब्रुव आत्मानं ब्राह्मणं ब्रूतेऽसौ तथा ।

मादृशेष्वपि पुरुषसिंहेषु स्नायमाना पापेयमवन्तिसुन्दरी । पश्यतु पतिमद्यैव शूलावतंसितमियमनार्यशीला कुलपांसनी' इति निर्भर्त्सयन्भीषणभ्रूकुटिदूषितललाटः काल इव काललोहदण्डकर्कशेन बाहुदण्डेनावलम्ब्य हस्ताम्बुजे रेखाम्बुजरथाङ्गलाञ्छने राजपुत्रं सरभसमाचकर्ष । स तु स्वभावधीरः सर्वपौरुषातिभूमिः सहिष्णुतैकप्रतिक्रियां दैवीमेव तामापदमवधार्य 'स्मर तस्या हंसकथायाः । सहस्व वासु मासद्वयम्' इति प्राणपरित्यागरागिणीं प्राणसमां समाश्वास्यारिवश्यतामयासीत् ।

अथ विदितवार्तावार्तौ महादेवीमालवेन्द्रौ जामातरमाकारपक्षपातिनावात्मपरित्यागोपन्यासेनारिणा जिघांस्यमानं ररक्षतुः । न शेकतुस्तु तमप्रभुत्वादुत्तारयितुमापदः । स किल चण्डशीलश्चण्डवर्मा सर्वमिदमुदन्तजातं राजराजगिरौ तपस्यते दर्पसाराय संदिश्य सर्वमेव पुष्पोद्भवकुटुम्बकं सर्वस्वहरणपूर्वकं सद्य एव बन्धने क्षिप्त्वा कृत्वा च राजवाहनं राजकेसरिकिशोरकमिव

---

कुत्सितैः' इति साधुः । शूलावतंसितं शूलारोपितम् । कुलपांसनी कुलदूषणी । भ्रूकुटिर्भ्रूः । 'भ्रुकुटिर्भ्रूकुटिः स्त्रियाम्' इत्यमरः । काल इव यम इव । कालो दण्डधरः श्राद्धदेवः' इत्यमरः । कालं श्यामायसम् । रेखारूपाण्यम्बुजानि रथाङ्गानि चक्राणि लाञ्छनानि यस्मिंस्तिति । सरभसं सवेगम् । स त्विति । सर्वपौरुषाणां पुरुषार्थानामतिभूमिरधिष्ठानम् । सहिष्णुतैव सहनशीलतैवैका । प्रतिक्रिया प्रतिकारो यस्या इति । वासु बाले । बाला स्याद्वासूः ।

अरिवश्यताममित्राधीनताम् । अयासीत् । 'या प्रापणे' इत्यस्य रूपम् । अथेति । विदितवार्तौ ज्ञातवृत्तान्तौ । आर्तौ पीडितौ । आत्मपरित्यागस्य देहपरित्यागस्योपन्यासेन वचनेनेत्यर्थः । 'उपन्यासस्तु वाङ्मुखम्' इत्यमरः । आकारेण सौन्दर्येण पक्षपातिनाविति महादेवीमालवेन्द्रयोर्विशेषणम् । न शेकतुरिति । 'शक्ऌ शक्तौ' लिटि परस्मैपदे रूपम् । तं राजपुत्रम् । अप्रभुत्वादसामर्थ्यात् स किलेति । उदन्तजातं वृत्तान्तजातम् 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमरः । राजराजगिरौ कुबेरपर्वते । तपस्यते तपस्यां कुर्वते । बन्धने कारागृहे

दारुपञ्जरनिबद्धं मूर्धजजालविलीनचूडामणिप्रभावविक्षिप्तक्षुत्पिपासादिखेदं च तमवधूतदुहितृप्रार्थनस्याङ्गराजस्योद्धरणायाङ्गानभियास्यन्ननन्यविश्वासान्निनाय । रुरोध च बलभरदत्तकम्पश्चम्पाम् । चम्पेश्वरोऽपि सिंहवर्मा सिंह इवासह्यविक्रमः प्राकारं भेदयित्वा महता बलसमुदायेन निर्गत्य स्वप्रहितदूतव्राताहूतानां साहाय्यदानायातिसत्वरमापततां धरापतीनामचिरकालभाविन्यपि संनिधावदत्तापेक्षः साक्षादिवावलेपो वपुष्मानक्षमापरीतः प्रतिबलं प्रतिजग्राह । जगृहे च महति संपराये क्षीणसकलसैन्यमण्डलः प्रचण्डप्रहरणशतभिन्नवर्मा सिंहवर्मा करिणः करिणमवप्लुत्यातिमानुषप्राणबलेन चण्डवर्मणा । स च तद्दुहितर्यम्बालिकायामबलारत्नसमाख्यातायामतिमात्राभिलाषः

---

केसरिणः सिंहस्य किशोरकमिव बालकमिव दारुपञ्जरे काष्ठपञ्जरे । मूर्धजजाले केशसमूहे विलीनो यश्चूडामणिस्तस्य प्रभावेन विक्षिप्तो दूरीकृतः क्षुत्पिपासादिखेदो यस्येति तम् । **अवधूतेति** । अवधूता दूरीकृता दुहितुः कन्यायाः प्रार्थना येनेति तस्याङ्गराजस्योद्धरणायोन्मूलनायाङ्गान्देशानभियास्यन्गच्छन्ननन्यविश्वासाभावान्निनायेत्यन्वयः । **रुरोधेति** । 'रुधिर् आवरणे' । **सिंहवर्मेति** । प्राकारं सालम् । प्राकारो वरणः सालः' इत्यमरः । न दत्तापेक्षा येनेति । अवलेपो गर्वः । संपराये युद्धे । 'संपरायः समीकं साम्परायिकम्' इति हैमः । क्षीणं सकलं सैन्यमण्डलं सेनासमूहो यस्येति तथा । मानुषमतिक्रम्य वर्तत इत्यतिमानुषं प्राणबलं यस्येति । जगृहे ग्रह उपादाने'

रत्नत्वेनोत्कृष्टत्वेन । अतिमात्रमभिलाषो यस्येति तथा । एनं सिंहवर्माणम् । **न व्ययूयुजदिति** । 'युजिर् योगे' हेतुमण्णिजन्ताल्लुङि रूपम् । **अपि त्विति** अनीनयत् । 'णीञ् प्रापणे' णिजन्ताल्लुङि प्रथमपुरुषे परस्मैपदैकवचनम् । अकल्या संधा प्रतिज्ञा यस्येति स तथा । बन्धनम् कारागृहम् । अगीगणत् । गण संख्याने' गणकसंघैर्ज्यौतिषिकसमूहैः । 'दैवज्ञगणकादेशिज्ञानि' इति हैमः । क्षपावसाने प्रातःकाले । कृतकौतुकमङ्गले बद्धकङ्कणबन्धे । तस्मिंश्चण्डवर्मणि । एकपिङ्गस्य कुबेरस्य । 'यक्षैकपिङ्गलविल—' इत्यमरः । अचलात्प्रेताम् । एणजङ्घो नाम जङ्घाकरिकः । शीघ्रगामीत्यर्थः । 'जङ्घाकरिकजाङ्घिकौ'

प्राणैरेनं न व्ययूयुजत्। अपि त्वनीनयदपनीताशेषशल्यमकल्यसन्धो बन्धनम्। अजीगणच्च गणकसंघैः 'अद्यैव क्षपावसाने विवाहनीया राजदुहिता' इति। कृतकौतुकमङ्गले च तस्मिन्नेकपिङ्गाचलात्प्रतिनिवृत्त्यैणजङ्घो नाम जङ्घाकरिकः प्रभवतो दर्पसारस्य प्रतिसंदेशमावेदयत्—'अयि मूढ, किमस्ति कन्यान्तःपुरदूषकेऽपि कश्चित्कृपावसरः। स्थविरः स राजा जराविलुप्तमानावमानचित्तो दुश्चरितदुहितृपक्षपाती यदेव किञ्चित्प्रलपति त्वयापि किं तदनुमत्या स्थातव्यम्। अविलम्बितमेव तस्य कामोन्मत्तस्य चित्रवधवार्ताप्रेषणेन श्रवणोत्सवोऽस्माकं विधेयः। सा च दुष्टकन्या सहानुजेन कीर्तिसारेण निगडितचरणा चारके निरोद्धव्या' इति। तच्चाकर्ण्य 'प्रातरेव राजभवनद्वारे स च दुरात्मा कन्यान्तःपुरदूषकः संनिधापयितव्यः। चण्डपोतश्च मातङ्गपतिरुपचितकल्पनोपपन्नस्तत्रैव समुपस्थापनीयः। कृतविवाहकृत्यश्चोत्थायाहमेव तमनार्य-

---

इत्यमरः। 'जङ्घालोऽतिजवो जङ्घाकरिकः। जाङ्घिको जवी' इति हैमः। दर्पसारस्य प्रतिसन्देशं प्रत्युत्तरम्। आवेदयत्। कथयामासेत्यर्थः। अयीति कोमलामन्त्रणे। मूढेत्यात्मीयतया संबोधनम्। कन्यान्तःपुरदूषके दूषणोद्भावके। स्थविरो वृद्धः। 'प्रवयाः स्थविरो वृद्धः' इत्यमरः। जरया विलुप्तौ मानावमानौ यस्यैवंविधं चित्तं यस्येति। दुश्चरिता दुराचारा 'प्रलापोऽनर्थकं वचः' इत्यमरः। किमित्याक्षेपे। **सा चेति**। सा दुष्टकन्या। अनुजेन कीर्तिसारेण सहेति। निगडितचरणा कृतबन्धना। चारके बन्धनागारे। 'चारकं बन्धनालयः' इति वैजयन्ती। **तच्चेति**। स च दुरात्मा कन्यान्तःपुरदूषकः संनिधापयितव्यः। संनिधौ स्थापनीय इत्यर्थः। चण्डपोतनामा मातङ्गपतिः। 'मातङ्गवारणमहामृगसामयोनयः' इति हैमः। करी। उपचिता याः कल्पनाः साधनानि तैरुपपन्नो युक्तः तत्रैव द्वारे। तमनार्यशीलं दुष्टस्वभावं तस्य हस्तिनः क्रीडनकं खेलनं कृत्वेति। शत्रुसाहाय्यकाय वैरिसाहाय्यार्थम्। प्रत्यासीदत आगच्छतः। राजन्यस्य क्षत्रियसमूहस्य। कोशो भाण्डागारम्। वाहनानि हस्त्यश्वादीनि। अवग्रहणं बन्धनम्। पार्श्वचरान्वीरान्। अवेक्षांचक्रे ददर्शेत्यर्थः। **निन्ये चेति**। द्विकर्मकोऽयं धातुः। असौ राजपुत्रो राजवाहन इति। उषोरागे प्रातःकालसंबन्धिनि लौहित्ये। 'उषःप्रत्युषसी' इत्यमरः। राजाङ्गणम्। 'अङ्गणं चत्वराजिरे' इत्यमरः। 'अङ्गणं चाङ्गनम्' इति द्विरूपकोशः।

शीलं तस्य हस्तिनः कृत्वा क्रीडनकं तदधिरूढ एव गत्वा शत्रुसाहाय्यकाय प्रत्यासीदतो राजन्यकस्य सकोशस्यावग्रहणं करिष्यामि' इति पार्श्वचरानवेक्षाञ्चक्रे । निन्ये चासावहन्यस्मिन्ननिमिषत्येवोषोरागे राजपुत्रो राजाङ्गणं रक्षिभिः । उपतस्थे च क्षरितगण्डश्चण्डपोतः । क्षणे च तस्मिन्मुमुचे तदङ्घ्रियुगलं रजतशृङ्खलया । स चैनं चन्द्रलेखाच्छविः काचिदप्सरोरूपिणी भूत्वा प्रदक्षिणीकृत्य प्राञ्जलिर्व्यजिज्ञपत्-'देव, दीयतामनुग्रहार्द्रं चित्तम् । अहमस्मि सोमरश्मिसंभवा सुरतमञ्जरी नाम सुरसुन्दरी । तस्या मे नभसि नलिनलुब्धमुग्धकलहंसानुबद्धवक्त्रायास्तन्निवारणक्षोभविच्छिन्नविगलिता हारयष्टिर्यदृच्छया जातु हैमवते मन्दोदके मग्नोन्मग्नस्य महर्षेर्मार्कण्डेयस्य मस्तके मणिकिरणद्विगुणितपलितमपतत् । पातितश्च कोपितेन कोऽपि तेन मयि शापः—'पापे,

---

उपतस्थे । 'ष्ठा गतिनिवृत्तौ' । प्राप्त्यर्थः । 'उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति । वक्तव्यम्' । 'वा लिप्सायाम्' इति चेत्यन्तरेणात्मनेपदम् । क्षरितः । स्रवन्गण्डः कटो यस्येति । 'गण्डः कटः' इत्यमरः मुमुचे 'मुच्लृ मोक्षणे' । वा कर्तरि लिट् । सा चेति । सा च रजतशृङ्खला । व्यजिज्ञपत् । सोमरश्मिसंभवेत्येतन्नामकगन्धर्वोत्पन्ना । सुरतमञ्जरीति नाम । तस्या मे नभस्याकाशे । नलिने पद्मे । 'वा पुंसि पद्मं नलिनम्' इत्यमरः । मुग्धो मूढः । मुग्धः सुन्दरमूढयोः' इत्यमरः । यः कलहंसस्तत्रानुबद्धं लग्नं वक्त्रं यस्याः । तन्निवारणं कलहंसनिवारणम् । विच्छिन्ना त्रुटितात एव विगलिता । हारयष्टिर्हारलता इति । 'यष्टिर्हारलताशस्त्रभेदयोः' इति विश्वः । कर्तृपदमिदम् । जातु कदाचित् । मग्नोन्मग्नस्य स्नानम् । कुर्वतः । मणिकिरणैर्द्विगुणितमसंख्यातीकृतं पलितं जराजातशौक्ल्यमिति क्रियाविशेषणम् । अपतत् 'पत्लृ पतने' । कोपितेन कोपः संजातो यस्येति तथा । 'तदस्य संजातं' इतीतच् । कोऽपि शापः । 'शप आक्रोशे' । लोहजातिं लोहत्वम । 'जातिर्जातं च सामान्यम्' इत्यमरः । न जातं चैतन्यं चेतनधर्मो यस्याः सेति । स मार्कण्डेयः । मासद्वयमात्रं मासद्वयप्रमाणम् । 'प्रमाणे द्वयसच्-' इति मात्रच् ।

भजस्व लोहजातिमजातचैतन्या सती' इति । स पुनः प्रसाद्यमानस्त्वत्पादपद्मद्वयस्य मासद्वयमात्रं संदानतामेत्य निस्तरणीयामिमामापदमपरिक्षीणशक्तित्वं चेन्द्रियाणामकल्पयत् । अनल्पेन च पाप्मना रजतशृङ्खलाभूतां मामैक्ष्वाकस्य राज्ञो वेगवतः पौत्रः, पुत्रो मानसवेगस्य, वीरशेखरो नाम विद्याधरः शङ्करगिरौ समध्यगमत् । आत्मसात्कृता च तेनाहमासम् । अथासौ पितृप्रयुक्तवैरे प्रवर्तमाने विद्याधरचक्रवर्तिनि वत्सराजवंशवर्धने नरवाहनदत्ते विरसाशयस्तदपकारक्षमोऽयमिति तपस्यता दर्पसारेण सह समसृज्यत । प्रतिश्रुतं च तेन तस्मै स्वसुरवन्तिसुन्दर्याः प्रदानम् । अन्यदा तु वियति व्यवदायमानचन्द्रिके मनोरथप्रियतमामवन्तिसुन्दरीं दिदृक्षुरवशेन्द्रियस्तदिन्द्रमन्दिरद्युति कुमारीपुरमुपासरत् । अन्तरितश्च तिरस्करिण्या विद्यया स च तां तदा त्वदङ्कापाश्रयां सुप्तां त्रिभुवनसर्गयात्रासंहारसंबद्धाभिः कथाभिरमृतस्यन्दिनीभिः प्रत्यानीयमानरागपूरां न्यरूपयत् ।

---

संदानतां पादबन्धनताम् । 'संदानं पादबन्धनम्' इत्यमरः । निस्तरणीयाम् समापनीयामित्यर्थः । 'इन्द्रियाणां मनःप्रभृतीनाम्' । अनल्पेनेति बहुना । पाप्मना पापेनेत्यर्थः । अस्त्री पङ्कं पुमान्पाप्मा पापम्' इत्यमरः । रजतशृङ्खलीभूताम् । 'अभूत-' इति च्विः । इक्ष्वाकोरयमैक्ष्वाकः । वेगवतस्तन्नाम्नो राज्ञः । शंकरगिरौ शंकरपर्वते । मां समध्यगमत् प्रापत्यर्थः । तेन वीरशेखरेणाहमात्मसादात्माधीना । तदधीने साति । अथेति । असौ वीरशेखरो विद्याधरः । पित्रा प्रयुक्तं यद्वैरं तस्मिन् । प्रवर्तमाने कुर्वाण इत्यर्थः । नरवाहनदत्ते विरसाशयः परुषान्तःकरणः । व्यवदायमानचन्द्रिके निर्मलज्योत्स्ने दैप् शोधने । प्रियतमाम् । दिदृक्षुर्द्रष्टुमिच्छुः । उपासरत् सृ गतौ इत्यस्य रूपम् । तिरस्करिण्यान्तर्धानकारिण्या विद्यया । स चेति वीरशेखरः । तामवन्तिसुन्दरीम् । त्वदङ्केऽपाश्रयो यस्या इति । 'व्यपाश्रयः शिरोभागः' इति वैजयन्ती । त्रिभुवनस्य त्रैलोक्यस्य । सर्ग उत्पत्तिः । 'यात्रा व्यवहारोस्थितिरिति यावत् । संहारः प्रलयस्तत्संबद्धाभिः कथाभिः । अमृतस्यन्दिनीभिरमृतप्रस्राविणीभिः । प्रत्यानीयमानः परावृत्त्या साध्यमानो रागपूरो यस्यास्ताम् । न्यरूपयत् दृष्टवानित्यर्थः 'विलोकनं निरीक्षणं निरूपणम्' इत्यजयः ।

स तु प्रकुपितोऽपि त्वदनुभावप्रतिबद्धनिग्रहान्तराध्यवसायः अत्यन्तसुखसुप्तयोर्युवयोर्दैवदत्तोत्साहः पाण्डुलोहशृङ्खलात्मना मया पादपद्मयोर्युगलं तव निगिडयित्वा सरोषरभसमपासरत्। अवसितश्च ममाद्य शापः। तच्च मासद्वयं तव पारतन्त्र्यम्। प्रसीदेदानीम्। किं तव करणीयम्' इति प्रणिपतन्ती 'वार्तयाऽनया मत्प्राणसमां समाश्वासय इति व्यादिश्य विससर्ज।

तस्मिन्नेव क्षणान्तरे 'हतो हतश्चण्डवर्मा सिंहवर्मदुहितुरम्बालिकायाः पाणिस्पर्शरागप्रसारिते बाहुदण्ड एव बलवदवलम्ब्य सरभसमाकृष्य केनापि दुष्करकर्मणा तस्करेण नखप्रहारेण राजमन्दिरोद्देशं च शवशतमयमापादयन्नचकितगतिरसौ विहरति' इति वाचः समभवन्। श्रुत्वा चैतत्तमेव मत्तहस्तिनमुदस्ताधोरणो राजपुत्रोऽधिरुह्य रंहसोत्तमेन राजभवनमभ्यवर्तत। स्तम्बेरमरयावधूतपदातिदत्तवर्त्मा च प्रविश्य वेश्माभ्यन्तरमदभ्राभ्रनिर्घोषगम्भीरेण स्वरेणाभ्यधात्—कः स महापुरुषो येनैतन्मानुषमात्रदुष्करं महत्कर्मानुष्ठितम्। आगच्छतु। मया सहेमं मत्तहस्तिनमारोहतु। अभयं मदुपकण्ठवर्तिनो देवदानवैरपि विगृह्णानस्य इति। निशम्यैवं स पुमानुपोढहर्षो निर्गत्य कृताञ्जलिराक्रम्य संज्ञासङ्कुचितं कुञ्जरगात्रमसक्तमध्यरुक्षत्। आरोहन्तमेवैनं निर्वर्ण्य

---

**स त्विति**। स तु विद्याधरो वीरशेखरः। त्वदनुभावेन त्वत्सामर्थ्येन प्रतिबद्धो निग्रहान्तराध्यवसायो निग्रहे मारणादावध्यवसायो निश्चयात्मिका बुद्धिर्यस्य। युवयोस्त्वं च सावन्तिसुन्दरी चेति तयोः। दैवेन दत्त उत्साहो यस्येति स विद्याधरः। पाण्डुलोहं रजतम्। 'सर्वं च तैजसं लोहम्' इत्यमरः। शृङ्खलात्मना शृङ्खलास्वरूपया। निगडयित्वा बध्वेत्यर्थः। सरोषरभसं सक्रोधवेगम्। अपासरत् जगामेत्यर्थः। अवसितः समाप्तिं प्राप्तः। परतन्त्रस्य भावः पारतन्त्र्यम्। 'परतन्त्रः पराधीनः' इत्यमरः। अनया मत्प्राणसमां मत्प्राणतुल्यामवन्तिसुन्दरीं समाश्वासयेति व्यादिश्य कथयित्वा विससर्जेति। **तस्मिन्निति**। क्षणान्तरे। 'उत्सवेऽवसरे क्षणः' इति महीपः। त्रिंशत्कलात्मकः क्षणः। 'तास्तु त्रिंशत्क्षणः' इत्यमरः। सरभसं सवेगम्। दुष्करकर्मणाऽसुकरकर्मणा। नखप्रहारेण छुरिकाघातेन। 'एकेनैव

हर्षोत्फुल्लदृष्टिः 'अये, प्रियसखोऽयमपहारवर्मैव' इति पश्चान्निषादतोऽस्य बाहुदण्डयुगलमुभयभुजमूलप्रवेशितमग्रेऽवलम्ब्य स्वमङ्गमालिङ्गयामास। स्वयं च पृष्ठतो वलिताभ्यां भुजाभ्यां पर्यवेष्टयत्। तत्क्षणोपसंहृतालिङ्गनव्यतिकरश्चापहारवर्मा चापचक्रकणपकर्पणप्रासपट्टिशमुसलतोमरादिप्रहरणजातमुपयुञ्जानान्बलावलिप्तान्प्रति बलवीरान्बहुप्रकारायोधिनः परिक्षिपतः क्षितौ विचिक्षेप। क्षणेन चाद्राक्षीत्तदपि सैन्यमन्येन समन्ततोऽभिमुखमभिधावता बलनिकायेन परिक्षिप्तम्।

अनन्तरं च कश्चित्कर्णिकारगौरः कुरुविन्दसवर्णकुन्तलः कमलकोमलपाणिपादः कर्णचुम्बदुग्धधवलस्निग्धनीललोचनः कटितटनिविष्टरत्ननखः पट्टनिवसनः कृशाकृशोदरोरःस्थलः कृतहस्त-

---

नखरप्रहारेण' इति पाठे नखरश्छुरिका। राजमन्दिरोद्देशं राजगृहप्रदेशम्। आपादयन् कुर्वन्। उदस्तोऽधः क्षिप्तः। 'आधोरणो हस्तिपको यन्तेति'। उत्तमेन रंहसा वेगेन। 'रयो वेगो जवो रंहः' इति वैजयन्ती'। रंहस्तरसी तु रयः स्यदः। जवः' इत्यमरः। स्तम्बेरमो हस्ती तस्य रयो वेगस्तेनावधूता दूरीकृता ये पादातयस्तैर्दत्तं वर्त्म यस्येति। अदभ्रं बहुलम्। अभ्रनिर्घोषगम्भीरेण मेघरसितगम्भीरेण। 'अभ्रं मेघो वारिवाहः' इत्यमरः। 'निर्घोषे रसितादि च' इत्यमरः। विगृह्णानस्य विरोधं कुर्वतः। उपोढहर्षो वर्धमानहर्षः। सञ्ज्ञया संकेतेन सकुञ्चितम्। कुञ्जरगात्रे पूर्वपदजङ्घाप्रदेशम्। 'द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात्' इत्यमरः असक्तम् त्वरितमित्यर्थः। अध्यरुक्षत् आरुरोहेत्यर्थः। निर्वर्ण्य दृष्ट्वा। 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्' इत्यमरः। अथ इति। 'अतर्कितोपनते त्वये' इति केशवः। प्रियसखोऽयमिति 'राजाहःसखिभ्यष्टच्' इत्यदन्तता। अपहारवर्मेति तन्नाम। वलिताभ्यां चालिताभ्याम्। 'वल चलने'। वक्रिताभ्यामित्यर्थः। तत्क्षण इति तस्मिन्नेव समये। उपसंहृत आलिङ्गनव्यतिकर आश्लेषसंपर्को येनेति तथा। चापो धनुः। चक्रम्। 'चक्रं भ्रमं कुण्डलम्' इति वैजयन्ती। 'चक्रं रथाङ्गे सेनायां छद्मन्यस्त्रान्तरेऽपि च' इति भागुरिश्च। कणपो लोहस्तम्भः। 'लोहस्तः

तया रिपुकुलमिषुवर्षेणाभिवर्षन्पादाङ्गुष्ठनिष्ठुरावघृष्टकर्णमूलेन प्रजविना गजेन संनिकृष्य पूर्वोपदेशप्रत्ययात् 'अयमेव स देवो राजवाहनः' इति प्राञ्जलिः प्रणम्यापहारवर्माणि निविष्टदृष्टिराचष्ट—'त्वदादिष्टेन मार्गेण संनिपातितमेतदङ्गराजसाहाय्यदानायोपस्थितं राजकम्। अखिलं च विहतविध्वस्तं स्त्रीबालहार्यशस्त्रं वर्तते। किमन्यत् कृत्यम्' इति। हृष्टस्तु व्याजहारापहारवर्मा—'देव, दृष्टिदानेनानुगृह्यतामयमाज्ञाकरः। सोऽयमहमेवामुना रूपेण धनमित्राख्यया चान्तरितो मन्तव्यः। स एवायं निर्गमय्य बन्धनादङ्गराजमावर्जितं च कोशवाहनमेकीकृत्यास्मद्गृह्येणामुना सह राजन्यकेनैकान्ते सुखोपविष्टमिह देवमुपतिष्ठतु यदि न दोषः' इति। देवोऽपि 'यथा ते रोचते' इति तमाभाष्य गत्वा च

---

म्भस्तु कणपः' इति वैजयन्ती। कर्पणः सरावः। 'कुटिलाग्रस्तु कर्पणः' इति च। प्रासः कुन्तः। 'प्रासस्तु कुन्त' इत्यमरः। पट्टिशः शस्त्रविशेषः। भाषया 'पट्टिशः स्याद्विशालाग्रः' इति वैजयन्ती। मुसलं कण्डनसाधनकाष्ठतुल्यमायसायुधम्। मुसलमिति वा। तोमरो लोहगुच्छः। 'तोमरो वेगदण्डवान्' इति वैजयन्ती। प्रहरणजातं शस्त्रसमूहम्। उपर्युपरि निपतद्भिर्निशितशरजालैः प्रत्यर्थिनः परिक्षिपन्तः। प्रतिबलवीरानप्रतिहतार्चिर्वीरान्। बहुप्रकारमनेकविधमाज्ञानान्प्रेरयतः। पातितवानियोधिनो युद्धं कुर्वतः। परिक्षिपतः। लोकानिति शेषः विचित्रेर। पातितवानित्यर्थः। **क्षणेनेति**। समन्ततः सर्वतः। 'समन्ततस्तु परितः सर्वतो विष्वगित्यपि' इत्यमरः। बलिनिकायेन सेनासमूहेन। 'स्यान्निकायः पुञ्जराशी' इत्यमरः। 'निकायो निवहो व्यूहः समूहो विसरो व्रजः' इति वैजयन्ती। **अनन्तरमिति**। कर्णिकारो द्रुमोत्पलस्तद्वद्गौरः। कुरुविन्देन सवर्णाः समानाः कुन्तलाः केशा यस्येति कुरुविन्दो नीलगुच्छः। नीलमणिरिति यावत्। कटितटे निविष्टो रत्नयुक्तो नखः नखरः इति वा छुरिका यस्येति। पट्टं दुकूलं निवसनं यस्येति तथा कृशाकृशे उदरोरःस्थले यस्येति स तथा कृशोदरः स्थूलोरःस्थलश्चेति योज्यम्। कृतहस्ततया शिक्षितहस्ततया। 'शिक्षितं कृतमर्थवत्' इति भागुरिः। इषुवर्षेण

तन्निर्दिष्टेन मार्गेण नगराद्बहिरतिमहतो रोहिणद्रुमस्य कस्यचित्क्षौमावदातसैकते गङ्गातरङ्गपवनपातशीतले तले द्विरदादवततार। प्रथमसमवतीर्णेनापहारवर्मणा च स्वहस्तसत्वरसमीकृते मातङ्ग इव भागीरथीपुलिनमण्डले सुखं निषसाद। तथा निषण्णं च तमुपहारवर्मार्थपालप्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुतैर्मैथिलेन च प्रहारवर्मणा, काशीभर्त्रा च कामपालेन, चम्पेश्वरेण सिंहवर्मणा, सहोपागत्य धनमित्रः प्रणिपपात। देवोऽपि हर्षाविद्धमभ्युत्थितः 'कथं समस्त एव मित्रगणः समागतः, को नामायमभ्युदयः' इति कृतयथोचितोपचारान्निर्भरतरं परिरेभे। काशीपतिमैथिलाङ्गराजांश्च सुहृन्निवेदितान्पितृवदपश्यत्। तैश्च हर्षकम्पितपलितं सरभसोपगूढः परमभिननन्द। ततः प्रवृत्तासु प्रीतिसं-

---

बाणवृष्ट्या। अङ्गुष्ठाभ्यां निष्ठुरं यथा तथावघृष्टं घर्षितं कर्णमूलं यस्येति तेन। प्रजविना सवेगेन। संनिकृष्य। संनिकर्षं कृत्वेत्यर्थः। निविष्टदृष्टिर्दत्तदृष्टिः। आचष्ट। 'चक्षिङ्'। त्वदादिष्टेनेति। 'अथ राजकम्। राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात्' इत्यमरः। राजकं राजसमूहम्। सस्त्रीबालैर्ह्रियते तत्। इति। आज्ञाकरः सेवकः। कोशवाहनमेकीकृत्य। एकत्र कृत्वेत्यर्थः। अस्मद्गृह्येणास्मत्पक्षस्थेन 'गृह्यः पक्षस्थ उच्यते' इति वैजयन्ती। राजन्यकेन क्षत्रियसमूहेन सह साकम्। देवम् स्वामिनमिति यावत्। उप समीपे तिष्ठतु। देव इति। देवो राजवाहनः। त इति तुभ्यम्। 'रुच्यर्थानां—' इति चतुर्थी। तमपहारवर्माणम्। तन्निर्दिष्टेनापहारवर्मकथितेन मार्गेण। रोहिणद्रुमस्य वटवृक्षस्य। 'वटवृक्षस्तु रोहिणः' इति वैजयन्ती। क्षौमवदवदातं शुद्धं यत्सैकतं सिकतामयं किञ्चित् तस्मिन्।

प्रथमेति। स्वहस्तेनात्मकरेण सत्वरं सवेगं समीकृते समतां प्रापिते निषसाद 'षद्लृ विशरणगत्यवसादनेषु—' इत्यस्य रूपम्। तथेति। तं राजवाहनम्। उपहारवर्मादिविश्रुतान्त्यैः षड्भिर्दशकुमारसमूहैः। मैथिलेन मिथिलाधिपेन।

कथासु प्रियवयस्यगणानुयुक्तः स्वस्य च सोमदत्तपुष्पोद्भवयोश्चरितमनुवर्ण्य सुहृदामपि वृत्तान्तं क्रमेण श्रोतुं कृतप्रस्तावस्तांश्च तदुक्तावन्वयुङ्क्त ।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते राजवाहनचरितं नाम प्रथम उच्छ्वासः ।



प्रहारवर्मणा कामपालेन सिंहवर्मणा सह धनमित्रः । धनमित्रासमूहान्तर्वर्ती काशीपतिर्मैथिलोऽङ्गराजस्तैस्त्रिभिः प्रहारवर्मकामपालसिंहवर्मभिः । निर्भरतरं दृढतरम् । तत इति । सोमदत्तपुष्पोद्भवयोश्चरितमाचरणं पूर्वपीठिकायामनुवर्ण्य । सुहृदां सर्वे ।



# विश्रुतचरितम्

## ( दशकुमारचरिते अष्टमोच्छ्वासः )

अथ सोऽप्याचचक्षे—'देव, मयापि परिभ्रमता विन्ध्याटव्यां कोऽपि कुमारः क्षुधा तृषा च क्लिश्यन्नक्लेशार्हः कश्चित्कूपाभ्याशेऽष्टवर्षदेशीयो दृष्टः। स च त्रासगद्गदमगदत्—'महाभाग, क्लिष्टस्य मे क्रियतामार्य, साहाय्यकम्। अस्य मे प्राणापहारिणीं पिपासां प्रतिकर्तुमुदकमुदञ्चन्निह कूपे कोऽपि निष्कलो ममैकशरणभूतः पतितः। तमलमस्मि नाहमुद्धर्तुम्' इति। अथाहम-

---

इदानीं विश्रुतनामा कुमारः स्वचरितं वक्तुमुपक्रमते। अथानन्तार्यार्थे। स विश्रुतनामा। अक्लेशार्हः क्लेशार्हो नेत्यर्थः। कूपो जलाशयः। अभ्याशे समीपे। देशीयः 'कल्पब्देश्यदेशीयरः' इति शब्दान्न्यूनार्थे। साहाय्यकं सहायस्य भावस्तथा पिपासा पातुमिच्छा। प्रतिकर्तुं दूरीकर्तुम्। उदञ्चन्निष्कासयन् कोऽप्यविदितकुलनामा। निष्कलः स्थविरः। वृद्ध इति यावत् 'निष्कलः स्थविरः समौ' इति वैजयन्ती। अयेति। व्रतत्या वल्ल्या। 'वल्ली तु व्रततिर्लता' इत्यमरः। रज्जुस्थानीकृतयेति

श्येत्य व्रतत्या कयापि वृद्धमुत्तार्य, तं च बालं वंशनालीमुखोद्धृताभिरद्भिः फलैश्च पञ्चषैः शरक्षेपाच्छ्रितस्य लकुचवृक्षस्य शिखरात्पाषाणपातितैः प्रत्यानीतप्राणवृत्तिमापाद्य, तरुतलनिषण्णस्तं जरन्तमब्रवम्—'तात, क एष बालः, को वा भवान्, कथं चेयमापदापन्ना' इति। सोऽश्रुगद्गदमगदत्—श्रूयतां महाभाग, विदर्भो नाम जनपदः तस्मिन्भोजवंशभूषणम्, अंशावतार इव धर्मस्य, अतिसत्त्वः, सत्यवादी, वदान्यः, विनीतः, विनेता प्रजानाम्, रञ्जितभृत्यः, कीर्तिमान्, उदग्रः, शास्त्रप्रमाणः, संभावयिता बुधान्, प्रभावयिता सेवकान्, उद्भावयिता बन्धून्, न्यग्भावयिता शत्रून्, असंबद्धप्रलापेष्वदत्तकर्णः, कदाचिदप्यवितृष्णो गुणेषु, अतिनदीष्णः कलासु, नेदिष्ठो धर्मार्थसंहितासु, उत्साहयिता कृतकर्मणामनुरूपैर्दानमानैः, षाड्गुण्योपयोगनिपुणः,

---

भावः। वंशनाली वेणुदण्डः पञ्चषैः पञ्चभिः षड्भिर्वा। 'संख्ययाव्यय—' इत्यादिना बहुव्रीहिः। बहुव्रीहौ संख्येये डजबहुगणात्—इति समासान्तो डच्, शरक्षेपो बाणगमनं ततोऽप्युच्छ्रितस्य। उच्चस्येत्यर्थः। लकुच वृक्षस्य। 'लकुचो लिकुचो डहुः' इत्यमरः, जरन्तं वृद्धम्। श्रूयतामिति। जनपदः देशः। 'नीवृज्जनपदौ देशविषयौ। विनीतो नम्रः। विनेता शिक्षाकर्ता। रञ्जिता अनुरागं प्रापिता भृत्याः सेवका येनेति उदग्र उन्नतः। मूर्तिः कायः। शास्त्रमेव प्रमाणं यस्येति स तथा। संभावयिता संभावना मानधनादिनेति। एवं सर्वत्र। असंबद्धाः परस्परामिलिताः प्रलापा निरर्थकवचनानि। 'प्रलापोऽनर्थकं वचः' इत्यमरः। अदत्तकर्णः। अश्रोतेत्यर्थः अवितृष्णो न विगता तृष्णा यस्येति स तथा। नदीष्णो निपुणः। 'नदीष्णाभिज्ञनिष्णातप्रवीणनिपुणा अपि' इत्यमरः। नदीपूर्वात् स्नातेरातोनुपसर्गे कप्रत्ययः। 'निनदीभ्यां स्नातेः कौशले' इति मूर्धन्यः। नेदिष्ठो निकटवर्ती 'अन्तिकबाढयोर्नेदसाधौ' इति साधु। षाड्गुण्यं षड्गुणाः। चातुर्वर्ण्यादिपाठात्स्वार्थे ष्यञ्प्रत्ययः। 'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः। षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः' इत्यमरः। चतुर्वर्णा एव चातुर्वर्ण्यम्। पुण्यश्लोकः

मनुमार्गेण प्रणेता चातुर्वर्ण्यस्य, पुण्यश्लोकः पुण्यवर्मा नामासीत्। स पुण्यैः कर्मभिः प्राप्य पुरुषायुषम्, पुनरपुण्येन प्रजानामगण्यतामरेषु। तदनन्तरमनन्तवर्मा नाम तदायतिरवनिमध्यतिष्ठत्। स सर्वगुणैः समृद्धोऽपि दैवाद्दण्डनीत्यां नात्यादृतोऽभूत्। तमेकदा रहसि वसुरक्षितो नाम मन्त्रिवृद्धः पितुरस्य बहुमतः प्रगल्भवागभाषत—'तात, सर्वैवात्मसंपदाभिजनात्प्रभृत्यन्यूनैवात्रभवति लक्ष्यते। बुद्धिश्च निसर्गपट्वी कलासु नृत्यगीतादिषु चित्रेषु च काव्यविस्तरेषु प्राप्तविस्तारा तवेतरेभ्यः प्रतिविशिष्यते। तथाप्यसावप्रतिपद्यात्मसंस्कारमर्थशास्त्रेषु, अनग्निसंशोधितेव हेमजातिर्नातिभाति बुद्धिः। बुद्धिहीनो हि भूभृदत्युच्छ्रितोऽपि परैरध्यारुह्यमाणमात्मानं न चेतयते। न च शक्तः साध्यं साधनं वा विभज्य वर्तितुम्। अयथावृत्तश्च कर्मसु प्रतिहन्यमानः स्वैः परैश्चः परिभूयते। न चावज्ञातस्याज्ञा प्रभवति प्रजानां योगक्षेमाराधनाय। अतिक्रान्तशासनाश्च प्रजा यत्किंचनवादिन्यो यथाकथंचिद्वर्तिन्यः सर्वाः स्थितीः

---

पवित्रकीर्तिः। 'पद्ये यशसि च श्लोकः' इत्यमरः। पुण्यवर्मेति नाम राजा। स इति। प्राप्य। जीवित्वेत्यर्थः। प्राप्य लब्ध्वा वा। पुरुषायुषं पूर्णमायुः। अपुण्येन पापेनेत्यर्थः अगण्यत 'गण संख्याने'। अमरेषु देवेषु। तदनन्तरम्। पुण्यवर्मोत्तरमित्यर्थः। अनन्तवर्मेति। तदायतिस्तस्मात्पुण्यवर्मण आयतिः प्रभावो यस्येति स तथा। 'स्यात्प्रभावेऽपि चायतिः' इत्यमरः। दैवाददृष्टात्। तथापीति। हेमजातिः सुवर्णजातिः। बुद्धिशून्यो बुद्धिहीनः। अत्युच्छ्रितोऽपि महानपि। परैः शत्रुभिः। अध्यारुह्यमाणमासाद्यमानम्। न चेतयते बिना संज्ञानेन स्मारयत इत्यर्थः। साध्यं कार्यम्। साधनं कारणम्। कर्मसु कार्येषु। स्वैरात्मीयैः। परिभूयते पराभवं प्राप्यते। अवज्ञातस्यावगणितस्य। योगोऽलभ्यलाभः। क्षेमं सिद्धिसंरक्षणम्। अप्राप्तप्रापणं योगः क्षेमं प्राप्तस्य रक्षणम्। द्वयं च साधयेद्भूपः प्रजानां विधिवत्प्रदः॥' इति। इतो लोकादिहलोकात्। अमुतः परलोकात्।

संकिरेयुः । निर्मर्यादश्च लोको लोकादितोऽमुतश्च स्वामिनमात्मानं च भ्रंशयते । आगमदीपदृष्टेन खल्वध्वना सुखेन वर्तते लोकयात्रा । दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति । तेन हीनः सतोरप्यायतविशालयोर्लोचनयोरन्ध एव जन्तुरर्थदर्शनेष्वसामर्थ्यात् । अतो विहाय बाह्यविद्यास्वभिषङ्गमागमय दण्डनीतिं कुलविद्याम् । तदर्थानुष्ठानेन चावर्जितशक्तिसिद्धिरस्खलितशासनः शाधि चिरमुदधिमेखलामुर्वीम् इति । एतदाकर्ण्य स्थाने एव गुरुभिरनुशिष्टम् । तथा क्रियते' इत्यन्तःपुरमाविशत् । तां च वार्तां पार्थिवेन प्रमदासंनिधौ प्रसङ्गेनो-

---

भ्रंशयन्ते पातयन्ति । आगम एव दीपस्तेन दृष्टेन । अध्वना मार्गेण । लोकयात्रा लोकस्थितिः अप्रतिहतवृत्ति न प्रतिहता कुण्ठिता वृत्तिर्यस्येति । तेन शास्त्रचक्षुषेत्यर्थः । हीनो रहितः । सतोर्विद्यमानयोः । विशालयोर्महतोः । बाह्यविद्यास्वितरविद्यासु । अभिषङ्गं सङ्गम् । 'अभिषङ्गस्त्वमिभवे सङ्गे आक्रोशनेऽपि च' इति वैजयन्ती । आगमय प्रापयेत्यर्थः । तदर्थानुष्ठानेन कुलविद्यानुष्ठानेनेत्यर्थः । आवर्जिता प्राप्ता । अस्खलितशासनोऽहताज्ञः । मुष्ट्यर्धमुष्टिः परिमाणविशेषः । आक्रोशात् । 'यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् । तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति ॥' इत्यमरः । ते प्राड्विवाकाः । अन्धःपरिणाम ओदनपरिपाकः । महान्तमायासं क्लेशम् । संभूय मिलित्वा । दूताः सेवकाः । चारा गूढदूताः । स्वपरमित्राणां मण्डलम् । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं संबध्यते । स्वमण्डलं परमण्डलं मित्रमण्डलं चेति व्याख्या । प्रशमयन्तः शान्तिं प्रापयन्तः । नृशंसा घातुकाः । शस्त्रान्मारकः । अग्निप्रणिधिरग्निदायकः । रसप्रणिधिर्विषदायकः । 'श्रृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इति मेदिनी । संविष्टः अगूढशयनः । 'संवेशः शयने स्थाने रतसमारोहणेऽपि च' इत्यजयः । अजस्रं निरन्तरम् । 'नित्यानवरताजस्रम्' इत्यमरः । विह्वलमनसो व्यकुलचित्तस्य । शास्त्रचिन्ता कार्यचिन्ता चेति । वीता शुल्कबाधा यत्रेति क्रियाविशेषणम् । वणिज्या वणिग्व्यापारया (?) अनवरतं निरन्तरम् । अभ्येत्यैकीभूत्वा गुणवत्साथकम् । ब्रह्मकल्पा ब्रह्मान्यूनाः । स्वस्त्ययनं क्षेमप्रापणम् । उपांश्वेकान्ते

दीरितामुपनिशम्य समीपोपविष्टश्चित्तवृत्तिकुशलः प्रसादवित्तो गीतनृत्यवाद्यादिष्ववबाह्यः पटुरयन्त्रितमुखो बहुभाङ्गिविशारदः परमर्मान्वेषणपरः परिहासयिता परिवादरुचिः पैशुन्यपण्डितः सचिवमण्डलादप्युत्कोचहारी सकलदुर्नयोपाध्यायः कुमारसेवको विहारभद्रो नाम स्मितपूर्वं व्यज्ञापयत्—'देव, दैवानुग्रहेण यदि कश्चिद्भाजनं भवति विभूतेः, तमकस्मादुच्चावचैरुपप्रलोभनैः कदर्थयन्तः स्वार्थं साधयन्ति धूर्ताः। तथाहि। केचित्प्रेत्य किल लभ्यैरभ्युदयातिशयैराशामुत्पाद्य, मुण्डयित्वा शिरः, बध्वा दर्भरज्जुभिः, अजिनेनाच्छाद्य, नवनीतेनोपलिप्य, अनशनं च शाययित्वा, सर्वस्वं स्वीकरिष्यन्ति। तेभ्योऽपि घोरतराः पाषण्डिनः पुत्रदारशरीरजीवितान्यपि मोचयन्ति। यदि कश्चित्पटुजातीयो नास्यै मृगतृष्णिकायै हस्तगतं त्यक्तुमिच्छेत्, तमन्ये परिवार्याहुः—'एकामपि

---

चक्रवर्तिता राष्ट्रव्यापकता। जन्मभूमिरुत्पत्तिस्थानम्। अरिषड्वर्गः कामक्रोधलोभमोहमदमात्सर्याणि। सामादिरुपायाः (यवर्गः)। 'सामदाने भेददण्डावित्युपायचतुष्टयम्' इत्यमरः। मन्त्रिवकैर्मन्त्रिकुत्सितैः। 'कुत्सितानि कुत्सनैः' इति समासः। 'अधोदृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च बकवृत्तिचरो द्विजः' इति मनुः। मन्त्रकर्कशा मन्त्रकठिनाः। 'पुंसि कोष्ठोऽन्तर्गृहं तथा' इति कोशः। अन्यार्जितं परकीयम्। वयःखण्डमायुष्यदेशम्। अपण्डिता नीचजनाः। यथार्हम्। वीप्सायां यथाशब्दः। पञ्चाङ्गी पञ्चानामङ्गानां समाहारस्तथा 'द्विगोः' इति ङीप्। 'जानू बाहुद्वयं मूर्धा पञ्चाङ्गम्' इत्युत्पलिनी। अञ्जलिना चुम्बितः स्पृष्टस्तूङ्गो मौलिर्येनेति तथा। अर्थेति। भूयोभूयो वारंवारम्। प्रस्तुतेऽर्थे प्रकृतकार्ये। मन्त्रिणः प्रधानस्य। अक्षिगतो द्वेष्यः। 'द्वेष्योऽक्षिगत उच्यते' इति हलायुधः। विलोकनवस्तु दानवस्तु। परपक्षान्मदीयपक्षवर्तिनः। अवष्टभ्यमानम् आक्रम्यमाणम्। विस्रम्भं विश्वासम्। प्रतिक्षिपति प्रतिक्षेपं करोति। महार्हाण्यमूल्यानि। नयज्ञानां नीतिविदाम् चाणक्यो नीतिशास्त्रकर्ता। वित्तज्ञानमनुवर्तन्ते ते तथा। दक्षिणाः सरला

काकिणीं कार्षापणलक्षमापादयेम, शस्त्राद्दते सर्वशत्रून्घातयेम, एकशरीरिणमपि मर्त्यं चक्रवर्तिनं विदधीमहि, यद्यस्मदुद्दिष्टेन मार्गेणाचर्यते' इति। स पुनरिमान्प्रत्याह—'कोऽसौ मार्गः' इति। पुनरिमे ब्रुवते—'ननु चतस्रो राजविद्यास्त्रयीवार्तान्वीक्षिकी दण्डनीतिरिति। तासु तिस्रस्त्रयीवार्तान्वीक्षिक्यो महत्यो मन्दफलाश्च, तास्तावदासताम्। अधीष्व तावद्दण्डनीतिम्। इयमिदानीमाचार्यविष्णुगुप्तेन मौर्यार्थे षड्भिः श्लोकसहस्रैः संक्षिप्ता। सैवेयमधीत्य सम्यगनुष्ठीयमाना यथोक्तकर्मक्षमा' इति। स 'तथा' इत्यधीते। शृणोति च। तत्रैव जरां गच्छति। तत्तु किल शास्त्रं शास्त्रान्तरानुबन्धि। सर्वमेव वाङ्मयमविदित्वा न तत्त्वतोऽधिगंस्यते। भवतु कालेन बहुनाल्पेन वा तदर्थाधिगतिः। अधिगतशास्त्रेण चादावेव पुत्रदारमपि न विश्वास्यम्। आत्मकुक्षेरपि कृते तण्डुलैरियद्भिरियानोदनः संपद्यते। इयत ओदनस्य पाकायैतावदिन्धनं

---

अपि। तस्य चित्तस्य भावस्तद्वाह्येकृताः। द्वेष्या वैरिणः। तथापीति। अविनीतोऽप्यत्युद्धतोऽपि। 'पिशुनः सूचकः खल' इति कोषः। अभ्रष्टपदोऽगताधिकारः। चारणगणैर्गायकसमूहैः। 'चारणो गायकः समौ' इति वैजयन्ती। शिल्पकारिणीभिश्चित्रकारिणीभिः। व्यसनम्। 'स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यार्थदूषणे। दण्डपारुष्यमित्येतन्महाव्यसनसप्तकम्॥' इति वैजयन्ती। मृगया पापर्द्धिः। औपकारिण्युपकारार्हा सा तथा। व्यायामो हिण्डनम्। सत्त्वानां प्राणिनाम्। चित्तस्य मनसः। चेष्टितस्य तत्क्रियायाश्च। गवलोऽरण्यमहिषः। 'रजस्वलो वाहद्विपुर्लुलायः' इत्यारभ्य रक्ताक्षः कासरो हंसकालीतनयकालिकौ' इत्यग्रतः 'अरण्यजोऽस्मिन्गवलः' इत्यभिधानचिन्तामणिवचनात्। गवयो गोसदृशः पशुः। 'गवयः स्याद्वनगवो गोसदृक्षोऽश्ववारणः' इत्यभिधानचिन्तामणिः। वृक ईहामृगः। 'कोक ईहामृगो वृकः' इत्यमरः। द्यूतेऽपीति। आशयौदार्यं चित्तौदार्यम्। परुषस्य भावः पारुष्यम्। औपकारिकाण्युपकारक्षमाणि। उपशमः शान्तिः। लोकतन्त्रम्। 'तन्त्रं कुटुम्बकृत्ये स्यात् कारणे च परिच्छदे।

पर्याप्तमिति मानोन्मानपूर्वकं देयम्। उत्थितेन च राज्ञा क्षालिताक्षालिते मुखे मुष्टिमर्धमुष्टिं वाभ्यन्तरीकृत्य कृत्स्नमायव्ययजातमह्नः प्रथमेऽष्टमे वा भागे श्रोतव्यम्। शृण्वत एवास्य द्विगुणमपहरन्ति तेऽध्यक्षधूर्ताश्चत्वारिंशतं चाणक्योपदिष्टानाहरणोपायान्सहस्रधात्मबुद्ध्यैव ते विकल्पयितारः। द्वितीयेऽन्योन्यं विवदमानानां प्रजानामाक्रोशाद्दह्यमानकर्णः कष्टं जीवति। तत्रापि प्राड्विवाकादयः स्वेच्छाया जयपराजयौ विदधानाः, पापेनाकीर्त्या च भर्तारमात्मानं चार्थैर्योजयन्ति। तृतीये स्नातुं भोक्तुं च लभते। भुक्तस्य यावदन्धःपरिणामस्तावदस्य विषभयं न शाम्यत्येव। चतुर्थे हिरण्यप्रतिग्रहाय हस्तं प्रसारयन्नेवोत्तिष्ठति। पञ्चमे मन्त्रचिन्तया महान्तमायासमनुभवति। तत्रापि मन्त्रिणो मध्यस्था इवान्योन्यं मिथः संभूय, दोषगुणौ दूतचारवाक्यानि शक्याशक्यतां देशकालकार्यावस्थाश्च स्वेच्छया विपरिवर्तयन्तः, स्वपरमित्रमण्डलान्युपजीवन्ति। बाह्याभ्यन्तरांश्च कोपान्गूढमुत्पाद्य प्रकाशं प्रशमयन्त इव स्वामिनमवशमवगृह्णन्ति। षष्ठ स्वैरविहारो मन्त्रो वा सेव्यः। सोऽस्यैतावान्स्वैरविहारकालो यस्य तिस्रस्त्रिपादोत्तरा नाडिकाः। सप्तमे च तुरगबलप्रत्यवेक्षणप्रयासः। अष्टमेऽस्य सेनापतिसखस्य विक्रमचिन्ताक्लेशः। पुनरुपास्यैव संध्याम्, प्रथमे रात्रिभागे गूढपुरुषा द्रष्टव्याः। तन्मुखेन चातिनृशंसाः शस्त्राग्निरसप्रणिधयोऽनुष्ठेयाः। द्वितीये भोजनानन्तरं श्रोत्रिय इव स्वाध्यायमारभेत। तृतीये तूर्यघोषेण संविष्टश्चतुर्थपञ्चमौ शयीत किल। कथमिवास्याजस्रचिन्तायासविह्वलमनसो वराकस्य निद्रासुखमुपनमेत। पुनः षष्ठे शास्त्रचिन्ताकार्यचिन्तारम्भः। सप्तमे तु मन्त्रग्रहो दूताभिप्रेषणानि

---

शास्त्रे प्रधाने सिद्धान्ते तन्तुवाये गदोत्तमे। तत्त्वादिसाधनोपाये श्रुतिशाखान्तरेऽपि च' इति विश्वः। प्रकृतयः प्रजाः। विश्रृङ्खलं बन्धशून्यम्। छिद्रान्वेषणाय। दोषगवेषणायेत्यर्थः। तन्त्राध्यक्षाः सेनापतयः। आयद्वाराण्यागमनोपायाः। व्ययमुखानि व्ययप्रभृतीनि। विटस्य षिङ्गस्य। वैधेयतया बालिशतया। 'मूर्खवैधेयबालिशाः' इत्यमरः। 'विधेयतया' इति पाठे विनयग्राहितया। 'विधेयो विनयग्राही' इत्यमरः।

च । दुताश्च नामोभयत्र प्रियाख्यानलब्धानर्थान्वीतशुल्कबाधवर्त्मनि वणिज्यया वर्धयन्तः, कार्यमविद्यमानमपि लेशेनोत्पाद्यानवरतं भ्रमन्ति । अष्टमे पुरोहितादयोऽभ्येत्यैनमाहुः—'अद्य दृष्टो दुःस्वप्नः । दुःस्था ग्रहाः । शकुनानि चाशुभानि । शान्तयः क्रियन्ताम् । ब्रह्मकल्पा इमे ब्राह्मणाः । कृतमेभिः स्वस्त्ययनं कल्याणतरं भवति । ते चामी कष्टदारिद्र्या बहुपत्या यज्वानो वीर्यवन्तश्चाद्याप्यप्राप्तप्रतिग्रहाः । दत्तं चैभ्यः स्वर्ग्यमायुष्यमरिष्टनाशनं च भवति' इति बहु बहु दापयित्वा तन्मुखेन स्वयमुपांशु भक्षयन्ति । तदेवमहर्निशमविहितसुखलेशमायासबहुलमविरलकदर्थनं च नयतोऽनयज्ञस्यास्तां चक्रवर्तिता स्वमण्डलमात्रमपि दुरारक्ष्यं भवेत् । शास्त्रसमाज्ञातो हि यद्ददाति, यन्मानयति, यत्प्रियं ब्रवीति, तत्सर्वमतिसंधातुमित्यविश्वासः । अविश्वास्यता हि जन्मभूमिरलक्ष्म्याः । यावता च नयेन विना न लोकयात्रा स लोक एव सिद्धः । नात्र शास्त्रेणार्थः । स्तनन्धयोऽपि हि तैस्तैरुपायैः स्तनपानं जनन्या लिप्सते तदपास्यातियन्त्रणामनुभूयन्तां यथेष्टमिन्द्रियसुखानि । येऽप्युपदिशन्ति 'एवमिन्द्रियाणि जेतव्यानि एवमरिषड्वर्गस्त्याज्यः, सामादिरुपायवर्गः स्वेषु परेषु चाजस्रं प्रयोज्यः, सन्धिविग्रहचिन्तयैव नेयः कालः, स्वल्पोऽपि सुखस्यावकाशो न देयः' इति, तैरप्येभिर्मन्त्रिबकैर्युष्मत्तश्चौर्यार्जितं धनं दासीगृहेष्वेव भुज्यते । के चैते वराकाः । येऽपि मन्त्रकर्कशा शास्त्रतन्त्रकर्तारः शुक्राङ्गिरसविशालाक्षबाहुदन्तिपुत्रपराशरप्रभृतयस्तैः किमरिषड्वर्गो जितः, कृतं वा तैः शास्त्रानुष्ठानम् ? तैरपि हि प्रारब्धेषु कार्येषु दृष्टे सिद्ध्यसिद्धी । पठन्तश्चापठद्भिरतिसंधीयमाना

---

प्रतिदिवसम् । धातृणां गणा अश्रुकण्ठ्यः । गद्गदयुक्ता इत्यर्थः । परोपजापा भेदाः । 'आद्रिद्रोणी स्यादापद्धेति' इति वैजयन्ती । अनपसारमार्गा अनिर्याणमार्गाः । वंशगुल्मा वेणुगहनानि । अग्निविसर्गैरग्निदानैः प्रोत्साह्य । आनन्त्येत्यर्थः । तट उन्नतप्रदेशः । प्रदरो निम्नगो भागः । विषममार्गः कठिनमार्गः । क्षुरिकाः शस्त्रिकाः । विसरः समुदायः 'समूहे निवहव्यूहसंदोहविसरव्रजाः' इत्यमरः । अनुयातानुगामी ।

वयः। नन्विदमुपपन्नं देवस्य, यदुत सर्वलोकस्य वन्द्या जातिः, अयातयामं वयः, दर्शनीयं वपुः, अपरिमाणा विभूतिः तत्सर्वं सर्वाविश्वासहेतुना सुखोपभोगप्रतिबन्धिना बहुमार्गविकल्पनात्सर्वकार्येष्वमुक्तसंशयेन तन्त्रावापेन मा कृथा वृथा। सन्ति हि ते दन्तिनां दश चैव सहस्राणि, हयानां लक्षत्रयम्, अनन्तं च पादातम्। अपि च पूर्णान्येव हेमरत्नैः कोशगृहाणि। सर्वश्चैष जीवलोकः समग्रमपि युगसहस्रं भुञ्जानो न ते कोष्ठागाराणि रेचयिष्यति। किमिदमपर्याप्तं यदन्यार्जितायायासः क्रियते? जीवितं हि नाम जन्मवतां चतुःपञ्चान्यहानि। तत्रापि भोगयोग्यमल्पाल्पं वयःखण्डम्। अपण्डिताः पुनरर्जयन्तः एव ध्वंसन्ते। नार्जितस्य वस्तुनो लवमप्यास्वादयितुमीहन्ते। किं बहुना? राज्यभारं आरक्षमेष्वन्तरङ्गेषु भक्तिमत्सु समर्प्य, यथार्हं कुरु शरीरलाभम् इति पञ्चाङ्गस्पृष्टभूमिरञ्जलिचुम्बितचूडश्चिरमशेत। प्राहसीच्च प्रीतिफुल्ललोचनोऽन्तःपुरप्रमदाजनः। जननाथश्च सस्मितम् 'उत्तिष्ठ, ननु हितोपदेशाद्गुरवो भवन्तः। किमिति गुरुत्वविपरीतमनुष्ठितम्' इति तमुत्थाप्य क्रीडानिर्भरमतिष्ठत्।

अथैषु दिनेषु भूयोभूयः प्रस्तुतेऽर्थे प्रेर्यमाणो मन्त्रिवृद्धेन, वचसाभ्युपेत्य मनसैवाचित्तज्ञ इत्यवज्ञातवान्। अथैवं मन्त्रिणो मनस्यभूत्—'अहो मे मोहाद्बालिशयम्। अरुचितेऽर्थे चोदयन्नर्थीवाक्षिगतोऽहमस्य जातः। स्पष्टमस्य चेष्टानामायथापूर्व्यम्। तथा हि। न मां स्निग्धं पश्यति, न स्मितपूर्वं भाषते, न रहस्यानि विवृणोति, न हस्ते स्पृशति, न व्यसनेष्वनुकम्पते, नोत्सवेष्वनुगृह्णाति, न विलोभनवस्तुनि प्रेषयति, न मत्सुकृतानि प्रगणयति

---

मृगदेहापराद्धशराद्धो लक्ष्यच्युतः। इषुमोक्षणैर्बाणपातनैः सपणबन्धं सनियमम्। अटवीमटन्ति त आटविकाः। व्यलीकं दुःखम्। योग्या नारी। 'योगो विस्रब्धघाती स्यात्' इति। अभ्यर्णे समीपे। आत्मनाटकीयां स्वीयनृत्याङ्गनाम्। संभूय मिलित्वा। प्राभृतीकृत्योपायनीकृत्य। अस्मिन्निति। हैमातुराय भिन्नमात्रे। पादचारिणं चरणगामिनम्। घोष आभीराल्पग्रामे। 'घोष

न मे गृहवार्तां पृच्छति, न मत्पक्ष्यान्प्रत्यवेक्षते, न मामासन्नकार्येष्वभ्यन्तरीकरोति, न मामन्तःपुरं प्रवेशयति। अपि च मामनर्हेषु कर्मसु नियुङ्क्ते, मदासनमन्यैरवष्टभ्यमानमनुजानाति, मद्वैरिषु विस्रम्भं दर्शयति, मदुक्तस्योत्तरं न ददाति, मत्समानदोषान्विगर्हति, मर्मणि मामुपहसति, स्वमतमपि मया वर्ण्यमानं प्रतिक्षिपति, महार्हाणि वस्तूनि मत्प्रहितानि नाभिनन्दति, नयज्ञानां स्खलितानि मत्समक्षं मूर्खैरुद्घोषयति। सत्यमाह चाणक्यः—'चित्तज्ञानानुवर्तिनोऽनर्था अपि प्रिया स्युः। दक्षिणा अपि तद्भावबहिष्कृता द्वेष्या भवेयुः' इति। तथापि का गतिः। अविनीतोऽपि न परित्याज्यः पितृपैतामहैरस्माद्दशैरयमधिपतिः। अपरित्यजन्तोऽपि कमुपकारमश्रूयमाणवाचः कुर्मः सर्वथा नयज्ञस्य वसन्तभानोरश्मकेन्द्रस्य हस्ते राज्यमिदं पतितम्। अपि नामापदो भाविन्यः प्रकृतिस्थमेनमापादयेयुः। अनर्थेषु सुलभव्यलीकेषु कच्चिदुत्पन्नोऽपि द्वेषः, सद्वृत्तमस्मै न रोचयेत्। भवतु भाविता तावदनर्थः। स्तम्भितपिशुनजिह्वो यथाकथंचिद्भ्रष्टपदस्तिष्ठेयम् इति। एवं गते मन्त्रिणि, राजनि च कामवृत्ते चन्द्रपालितो नामाश्मकेन्द्रामात्यस्येन्द्रपालितस्य सूनुः असद्वृत्तः पितृनिर्वासितो नाम भूत्वा, बहुभिश्चारगणैर्बह्वीभिरनल्पकौशलाभिः शिल्पकारिणीभिरनेकच्छन्नकिङ्करैश्च गूढपुरुषैः परिवृतोऽभ्येत्य विविधाभिः क्रीडाभिर्विहारभद्रमात्मसादकरोत्। अमुना चैव संक्रमेण राजन्यास्पदमलभत। लब्धरन्ध्रश्च स यद्यद्व्यसनमारभते तत्तथेत्यवर्णयत् 'देव, यथा मृगया ह्युपकारिकी न तथान्यत्। अत्र हि व्यायामोत्कर्षादापत्सूरकर्ता दीर्घाध्वलङ्घनक्षमो जङ्घाजवः, सत्त्वानाम-

---

आभीरपल्ली स्यात्' इत्यमरः। दूराध्वं दूरमार्गम्। पिपासा तृषा। विशरणस्य शरणरहितस्य। पित्र्ये पदे पितुः स्थाने। सपत्नाकृतः पक्षेण सह विद्धः। 'बाहने तु छदे पत्रम्' इति भागुरिः। आक्रोशनमाक्षारणा। दारदो वत्सनाभः। 'दारदो वत्सनाभः स्यात्' इत्यमरः। संनीय संमिश्रय। तोयम् उदकम्। तया मालया। अगदेनौषधेन। 'संजीवनं स्यादगदम्' इति

वस्थान्तरेषु चित्तचेष्टितज्ञानम्, हरिणगवलगवयादिवधेन सस्यलोपप्रतिक्रिया, वृकव्याघ्रादिघातेन स्थलपथशल्यशोधनम्, उत्साहशक्तिसंधुक्षणेन प्रत्यनीकवित्रासनमिति बहुतमा गुणाः द्यूतेऽपि द्रव्यराशेस्तृणवत्त्यागादनुपमानमाशयौदार्यम्, पौरुषैक-निमित्तस्यामर्षस्य वृद्धिः, अतिकर्कशपुरुषप्रतिसंसर्गादनन्यधर्ष-णीयता, मानावधारणम्, अकृपणं च शरीरयापनमिति । वाक्पा-रुष्यं दण्डो दारुणो दूषणानि चार्थानामेव यथावकाशमौपका-रिकाणि । नहि मुनिरिव नरपतिरुपशमरतिरभिभवितुमरिकुलम् अवलम्बितुं च लोकतन्त्रम्' इति । असावपि गुरूपदेशमि-वात्यादरेण तस्य मतमन्ववर्तत । तच्छीलानुसारिण्यश्च प्रकृतयो विशृङ्खलमसेवन्त व्यसनानि । सर्वश्च समानदोषतया न कस्य-चिच्छिद्रान्वेषणायायतिष्ट । समानभर्तृप्रकृतयस्तन्त्राध्यक्षाः स्वानि कर्मफलान्यभक्षयन् । ततः क्रमादायद्वाराणि व्यशीर्यन्त । व्ययमु-खानि विटवैधेयतया विभोरहरहर्व्यवर्धन्त । अहन्यन्त दुर्बला बलिभिः । अपहृतानि धनवतां धनानि तस्करादिभिः । अपहृत-परिभूतयः प्रहताश्च पातकपथाः । हतबान्धवा हृतवित्ता वधबन्धातुराश्च मुक्तकण्ठमाक्रोशन्नश्रुकण्ठ्यः प्रजाः । दण्डश्चा-यथाप्रणीतो भयक्रोधावजनयत् । कुशकुटुम्बेषु लाभः पदमधत्त । विमानिताश्च तेजस्विनो मानेनादह्यन्त । तेषु तेषु चाकृत्येषु प्रासरन्परोपजापाः अथ वसन्तभानुर्भानुवर्माणं नाम वानवास्यं प्रोत्साह्यानन्तवर्मणा व्यग्राहयत् । तत्परामृष्टराष्ट्रपर्यन्तश्चा-नन्तवर्मा तमभियोक्तुं बलसमुत्थानमकरोत् । सर्वसामन्तेभ्यश्चा-श्मकेन्द्रः प्रागुपेत्यास्य प्रियतरोऽभूत् । अपरेऽपि सामन्ताः

---

वैजयन्ती । तस्यां स्वदुहितरि । निर्विकारायां विकारशून्यायाम् । प्रकृतयः प्रजाः । संदेश्यम् कथनीयमित्यर्थः । कापालिको व्रतधारी—'कापाली स्यान्महाव्रती' इति कोशः । पुरो बहिः । नगराद्बहिरित्यर्थः । आर्यप्रायान् श्रेष्ठानित्यर्थः । स्वप्ने स्वप्नावस्थायाम् । म इति मह्यम् । मरिष्यतीति । मृङ् प्राणत्यागे' इत्यस्य रूपम् । वैजन्यं विजनस्य भावस्तया । तिरस्कृत्य भीषयित्वा । द्विजाति-

समगंसत। गत्वा चाभ्यर्णे नर्मदारोधसि न्यविशन्। तस्मिंश्चावसरे महासामन्तस्य कुन्तलपतेरवन्तिदेवस्यात्मनाटकीयां दमातलोर्वशीं नाम चन्द्रपालितादिभिरतिप्रशस्तनृत्यकौशलामाहूयानन्तवर्मा नृत्यमद्राक्षीत्। अश्मकेन्द्रस्तु कुन्तलपतिमेकान्ते समभ्यधत्त—प्रमत्त एष राजा कलत्राणि नः परामृशति। कियत्यवज्ञा सोढव्या। मम शतमस्ति हस्तिनाम्, पञ्चशतानि च ते। तदावां संभूय मुरलेशं वीरसेनमृषीकेशमेकवीरं कोङ्कणपतिं कुमारगुप्तं नासिक्यनाथं च नागपालमुपजपाव। ते चावश्यमस्याविनयमसहमाना अस्मन्मतेनैवोपावर्तेरन्। अयं च वानवास्यः प्रियं मे मित्रम्। अमुनैनं दुर्विनीतमग्रतो व्यतिषक्तं पृष्ठतः प्राहरेम। कोशवाहनं च विभज्य गृह्णीमः' इति हृष्टेन चामुनाभ्युपेते, विंशतिं वरांशुकानाम्, पञ्चविंशतिं काञ्चनकुङ्कुमकम्बलानाम्, प्रभृतीकृत्याप्तमुखेन तैः सामन्तैः संमन्त्र्य तानपि स्वमतावस्थापयत्। उत्तरेद्युस्तेषां सामन्तानां वानवास्यस्य च अनन्तवर्मा नयद्वेषादामिषत्वमगमत्। वसन्तभानुश्च तत्कोषवाहनमवशीर्णमात्माधिष्ठितमेव कृत्वा यथाप्रयातं यथाबलं च विभज्य, 'गृह्णीत युष्मदनुज्ञया येन केनचिदंशेनाहं तुष्यामि' इति शाठ्यात्सर्वानुवर्ती, तेनैवामिषेण निमित्तीकृत्योत्पादितकलहः सर्वसामन्तानध्वंसयत्। तदीयं च सर्वस्वं स्वयमेवाग्रसत्। वानवास्यं केनचिदंशेनानुगृह्य प्रत्यावृत्य सर्वमनन्तवर्मराज्यमात्मसात्करोत्। अस्मिन्नन्तरे मन्त्रिवृद्धो 'वसुरक्षितः कैश्चिन्मौलैः संभूय बालमेनं भास्करवर्माणम्, अस्यैव ज्यायसीं भगिनीं त्रयोदशवर्षां मञ्जुवादिनीम्, अनयोश्च मातरं महादेवीं वसुन्धरा-

---

दारकस्य ब्राह्मणपुत्रस्य। दारत्वेन। स्त्रीत्वेन। युष्मास्वेव। भवत्स्वेवेत्यर्थः। सांप्रतम्। युक्तमित्यर्थः। प्रासर्पत्प्रसृतोऽभूत्। असिप्रहार एव खड्गप्रहार एव। उपधिः कपटम् दाम माला। दुहित्रे कन्यायै। मण्डनं भूषणम्। शासनमाज्ञाम्। अतिवर्ततेऽतिक्रामति। प्रस्नुतस्तनी पयःप्रसरत्स्तनी। द्रक्ष्यसि पश्यसीत्यर्थः। सानाथ्यशंसी सनाथस्य भावः सानाथ्यं तच्छंसतेऽसौ तथा। मद्दर्शनरागेण बद्धं

मादायापसर्पन्नापदोऽस्या भावितया दाहज्वरेण देहमजहात्। अस्मादृशैर्मित्रैस्तु नीत्वा माहिष्मतीं भर्तृद्वैमातुराय भ्रात्रे मित्रवर्मणे सापत्या देवी दर्शिताभूत्। तां चार्यामनार्योऽसावन्यथाऽभ्यमन्यत। निर्भर्त्सितश्च तया 'सुतमियमखण्डचारित्रा राज्यार्हं चिकीर्षति' इति नैर्घृण्यात्तमेनं बालमजिघांसीत्। इदं तु ज्ञात्वा देव्याहमाज्ञप्तः 'तात नालीजङ्घ, जीवतानेनार्भकेण यत्र क्वचिदवधाय जीव। जीवेयं चेदहमप्येनमनुसरिष्यामि। ज्ञापय मां क्षेमप्रवृत्तः स्ववार्ताम्' इति अहं तु संकुले राजकुले कथंचिदेनं निर्गमय्य विन्ध्याटवीं व्यगाहिषि। पादचारिणं चैनमाश्वासयितुं घोषे क्वचिदहानि कानिचि-द्विश्रमय्य, तत्रापि राजपुरुषसंपातभीतो दूराध्वमपासरम्। तत्रास्य दारुणपिपासापीडितस्य वारि दातुकामः कूपेऽस्मिन्नपभ्रश्य पतितस्त्वयैवमनुगृहीतः। त्वमेवास्यातः शरणमेधि विशरणस्य राजसूनोः' इत्यञ्जलिमबध्नात्। 'किमीया जात्यास्य माता इत्यनुयुक्ते मयामुनोक्तम्—पाटलिपुत्रस्य वणिजो वैश्रवणस्य दुहितरि सागरदत्तायां कोसलेन्द्रात्कुसुमधन्वनोऽस्य माता जाता' इति। 'यद्येवमतन्मातुर्मत्पितुश्चैको मातामहः' इति सस्नेहं तमहं सस्वजे। वृद्धेनोक्तम्—'सिन्धुदत्तपुत्राणां कतमस्ते पिता इति। 'सुश्रुतः' इत्युक्ते सोऽत्यहृष्यत्। अहं तु 'तं नयावलिप्तमश्मकेन्द्रं नयेनैवोन्मूल्य बालमेनं पित्र्ये पदे प्रतिष्ठापयेयम्' इति प्रतिज्ञाय 'कथमस्यैनां क्षुधं क्षपयेयम्' इत्याचिन्तयम्। तावदापतितौ च कस्यापि व्याधस्य शीघ्रनिपुणतीर्थ्य द्वौ मृगौ स च व्याधः। तस्य हस्तादवशिष्टमिषुद्वयं कोदण्डं चाक्षिप्याव्यधिषम्। एकश्च सपत्राकृतोऽन्यश्च निष्पत्राकृतोऽपतत्। तं चैकं मृगं दत्वा मृगयवे,

---

साध्वसं भयोति सा ताम्। मञ्जुवादिनीम्। मञ्जु मञ्जुलं वदति सा मञ्जुवादिनी ताम्। प्रणमय्य नमस्कारं कारयित्वेत्यर्थः। अब्रूत 'ब्रूञ् व्यक्तायां वाचि' इत्यस्य रूपम्। सस्मितं सहासमभिहितम्। रागलीला या दृष्टितया लीढमास्वादितं यद्दैर्घ्यं तेन लब्धभैक्षो लब्धा प्राप्ता भिक्षा येनेति भिक्षादिभ्योऽण्। नालीजङ्घनतनामानम्। आकार्य। अनुयान्तं पश्चादनुवर्तमानम्। आस्थानमण्डपे सभामण्डपे।

अन्यस्यापलोमत्वचः क्षौमापोह्य, निष्कुलाकृत्य विकृत्योर्वङ्घ्रिग्रीवादीनि शूलाकृत्य दावाङ्गारेषु तत्तेनामिषेण तयोरात्मनश्च क्षुधमत्यतार्षम्। एतस्मिन्कर्मणि मत्सौष्ठवेनातिहृष्टं किरातमसि पृष्टवान्—'अपि जानासि माहिष्मतीवृत्तान्तम्' इति। असावाचष्ट 'तत्र व्याघ्रत्वचो हर्तीश्च विक्रीयाद्यैवागतः किं न जानामि। प्रचण्डवर्मा नाम चण्डवर्मानुजो मित्रवर्मदुहितरं मञ्जुवादिनीं विलिप्सुरभ्येतीति तेनोत्सवोत्तरा पुरी' इति। अथ कर्णे जीर्णमब्रवम्—'धूर्तो मित्रवर्मा दुहितरि सम्यक्प्रतिपत्त्या मातरं विश्वास्य तन्मुखेन प्रत्याकृष्य बालकं जिघांसति। तत्प्रतिगत्य कुशलमस्य मद्वार्तां च देव्यै रहो निवेद्य पुनः कुमारः शार्दूलभक्षित इति प्रकाशमाक्रोशनं कार्यम्। स दुर्मतिरन्तःप्रीतो बहिर्दुःखं दर्शयन्देवीमनुनेष्यति। पुनस्तया त्वन्मुखेन स वाच्यः—'यदपेक्षया त्वन्मतमत्यक्रमिषं सोऽपि बालः पापेन मे परलोकमगात्। अद्य तु त्वदादेशकारिण्येवाहम्' इति। स तथोक्तः प्रीतिं प्रतिपद्याभिपत्स्यति। पुनरनेन वत्सनाभनाम्ना महाविषेण संनीय तोयं तत्र मालां मज्जयित्वा तया स वक्षसि मुखे च हन्तव्यः। 'स एवायमसिप्रहारः पापीयसस्तव भवतु यद्यस्मि पतिव्रता' पुनरनेनागदेन संगमितेऽम्भसि तां मालां मज्जयित्वा स्वदुहित्रे देया। मृते तु तस्मिंस्तस्यां च निर्विकारायां सत्याम्, सतीत्येवैनां प्रकृतयोऽनुवर्तिष्यन्ते। पुनः प्रचण्डवर्मणे संदेश्यम्—'अनायकमिदं राज्यम्। अनेनैव सह बालिकेयं स्वीकर्तव्या' इति। तावदावां कापालिकवेषच्छन्नौ देव्यैव दीयमानभिक्षौ पुरो बहिरुपश्मशानं वत्स्यावः। पुनरार्यप्रायान्पौरवृद्धानाप्तांश्च मन्त्रिवृद्धानेकान्ते ब्रवीतु देवी—'स्वप्नेऽद्य

---

कुशलवै नर्तकै गीतं गानम्। नानारुदितानि रोदनशब्दानुकरणानि। हस्तयोश्चङ्क्रमणामितस्ततः प्रसारणम् भ्रमणं वा। ऊर्ध्वपादमाला पादम् 'कराभ्यामवनीं स्पृष्ट्वा मूर्धानं भ्रामयेन्मुहुः। उत्तानीकृत्य चरणावूर्ध्वपादं तदुच्यते॥' इति। नृत्याध्याये भरतः—'उद्धृत्यैकं तु चरणमन्यं कृत्वैव कुञ्चितम्। नृत्यत्यनुमतं तिर्यक्शालातकमेव च॥' इत्यपि। वृश्चिकलङ्घनं मकरलङ्घनं चेति द्वन्द्वान्ते श्रूयमाणं पदं

मे देव्या विन्ध्यवासिन्या कृतः प्रसादः । अद्य चतुर्थेऽहनि प्रचण्डवर्मा मरिष्यति । पञ्चमेऽहनि रेवातटवर्तिनि मङ्गलवने परीक्ष्य वैजन्यम्, जनेषु निर्गतेषु कपाटमुद्घाट्य त्वत्सुतेन सह कोऽपि द्विजकुमारो निर्यास्यति । स राज्यमिदमनुपाल्य बालं ते प्रतिष्ठापयिष्यति । स खलु बालो मया व्याघ्रीरूपया तिरस्कृत्य स्थापितः । सा चेयं वत्सा मञ्जुवादिनी तस्य द्विजातिदारकस्य दारत्वेनैव कल्पिता' इति । तदेतदतिरहस्यं युष्मास्वेव गुप्तं तिष्ठतु यावदेतदुपपत्स्यते' इति स सांप्रतमतिप्रीतः प्रयातोऽथश्चायं यथाचिन्तितमनुष्ठितोऽभूत् । प्रतिदिशं च लोकवादः प्रासर्पत्—'अहो माहात्म्यं पतिव्रतानाम् । असिप्रहार एव हि स मालाप्रहारस्तस्मै जातः । न शक्यमुपधियुक्तमेतत्कर्मेति वक्तुम् । यतस्तदेव दत्तं दाम दुहित्रे मण्डनमेव तस्यै जातम् न मृत्युः । योऽस्याः पतिव्रतायाः शासनमतिवर्तते स भस्मैव भवेत्' इति ।

अथ महाव्रतिवेषेण मां च पुत्रं च भिक्षायै प्रविष्टौ दृष्ट्वा प्रस्नुतस्तनी प्रत्युत्थाय हर्षाकुलमब्रवीत्—'भगवन्' अयमञ्जलिः । अनाथोऽयं जनोऽनुगृह्यताम् । अस्ति ममैकः स्वप्नः स किं सत्यो न वा' इति । मयोक्तम्—'फलमस्याद्यैव द्रक्ष्यसि' इति । 'यद्येवं बहु भागधेयमस्या वो दास्याः । स खल्वस्याः सानाथ्यशंसी स्वप्नः' इति मद्दर्शनरागबद्धसाध्वसां मञ्जुवादिनीं प्रणमय्य, भूयोऽपि सा हर्षगर्भमब्रूत—'तच्चेन्मिथ्या सोऽयं युष्मदीयो बालकपाली श्वो मया निरोद्धव्यः' इति । मयापि सस्मितं मञ्जुवादिनीरागलीनदृष्टिलोढधैर्येणाभिहितम् 'एवमस्तु' इति । लब्धप्रेक्षो नालीजङ्घमाकार्य निर्गत्य ततश्च तं चानुयान्तं

---

प्रत्येकं संबध्यते । मत्स्योद्वर्तनानि मीनवद्विलसितानि । आदायादाय विश्वासद्योतनार्थं द्विरुक्तिः । क्षुरिकाः शस्त्राणि । ताभिः क्षुरिकाभिः । उपाहितवर्मा संयुक्तदेहः । 'वर्म विग्रहः' इत्यमरः । श्येनपात । 'परिक्रम्यान्तरिक्षेण संप्राप्योऽवरुह्यताम् । आकस्मिकाभिपातेन श्येनपात इतीरितः' इति । उत्क्रोशपातश्च कुररपातः 'उत्क्रोशकुररौ समौ' इत्यमरः । चापे प्रसारितबाहुद्वयप्रमाणं

शनैरपृच्छम्—'क्वासावल्पायुः प्रथितः प्रचण्डवर्मा' इति। सोऽब्रूत 'राज्यमिदं ममेत्यपास्तशङ्को राजास्थानमण्डप एव तिष्ठत्युपास्यमानः कुशीलवैः' इति। 'यद्येवमुद्याने तिष्ठ' इति तं जरन्तमादिश्य तत्प्राकारैकपार्श्वे क्वचिच्छून्यमठिकायां मात्राः समवतार्य, तद्रक्षणनियुक्तराजपुत्रः, कृतकुशीलववेषलीलः प्रचण्डवर्माणमेत्यान्वरञ्जयम्। अनुरञ्जितातपे तु समये, जनसमाजज्ञानापयोगीनि संहृत्य नृत्यगीतनानारुदितानि हस्तचङ्क्रमणमूर्ध्वपादालातपादापीडवृश्चिकमकरलङ्घनादीनि मत्स्योद्वर्तनादीनि च करणानि, पुनरादायादायासन्नवर्तिनां क्षुरिकाः ताभिरुपाहितवर्ष्मा चित्रदुष्कराणि करणानि श्येनपातोत्क्रोशपातादीनि दर्शयन्, विंशतिचापान्तरालावस्थितस्य प्रचण्डवर्मणश्छुरिकयैकया प्रत्युरसं प्रहृत्य, 'जीव्याद्वर्षसहस्रं वसन्तभानुः' इत्याभिगर्जन्, मद्गात्रमुत्कर्तुमुद्यतासेः कस्यापि चारभटस्य पीवरांसबाहुशिखरमाक्रम्य, तावतैव तं विचेतीकुर्वन्, आकुलं च लोकमुच्चक्षूकुर्वन्, द्विपुरुषोच्छ्रितं प्राकारमत्यलङ्घयम्। अवप्लुत्य चोपवने 'मदनुपातिनामेष पन्था दृश्यते' इति ब्रुवाण एव नालीजङ्घसमीकृतसैकतास्पृष्टपादन्यासया तमालवीथ्या चानुप्राकारं प्राचा प्रतिप्रधावितः पुनरवाचोच्चितेष्टक्वचितत्वादलक्ष्यपातेन प्रद्रुत्य, लङ्घितप्राकारवप्रखातवलयः, तस्यां शून्यमठिकायां तूर्णमेव प्रविश्य, प्रतिमुक्तपूर्ववेषः, सह कुमारेण मत्कर्म तुमुलराजद्वारिदुःखलब्धवर्त्मा श्मशानोद्देशमभ्यगाम्। प्रागेव तस्मिन्दुर्गागृहे प्रतिमाधिष्ठान एव मया कृतं भग्नपार्श्वस्थैर्यस्थूलप्रस्तरस्थगितबाह्यद्वारं बिलम्।

अथ गलति मध्यरात्रे वर्षवरोपनीतमहार्हरत्नभूषणस्तनिव-

---

चाप इत्युच्यते 'विंशतिचाप' इति पाठो मुख्यः। मद्गात्रं मच्छरीरम्। उत्कर्तुं त्रोटयितुम्। उद्यतासेरूर्ध्वीकृतखड्गस्य। चारभटस्य चारश्चासौ भटश्चेति व्युत्पत्तिः। 'भटश्चारभटो मतः' इति हलायुधः। पीवरांसं मांसलस्कन्धम्। तं चारभटम्। द्विपुरुषोच्छ्रितं पुरुषद्वयप्रमाणोच्चम्। अवप्लुत्य कूर्दित्वा। सैकतं सिकतामयम्। अस्पृष्टपादन्यासया न स्पृष्टः पादन्यासश्चरणपातो

सनौ तद्बिलमावां प्रविश्य तूष्णीमतिष्ठाव। देवी तु पूर्वेद्युरेव यथार्हमग्निसंस्कारं मालवाय दत्त्वा प्रचण्डवर्मणे चण्डवर्मणे च तामवस्थामश्मकेन्द्रोपाधिकृतामेव संदिश्य, उत्तरेद्युः प्रत्युषस्येव पूर्वसंकेतितपौरामात्यसामन्तवृद्धैः सहाभ्येत्य भगवतीमर्चयित्वा सर्वजनप्रत्यक्षं परीक्षितकुक्षिवैजन्यं तद्भवनं विधाय दत्तदृष्टिः सह जनेन स्थित्वा, पटीयांसं पटहशब्दमकारयत्। अणुतररन्ध्रप्रविष्टेन तेन नादेनाहं दत्तसंज्ञः शिरसैवोत्क्षिप्य सप्रतिमं लोहपादपीठमांसलपुरुषप्रयत्नदुश्चलमुभयकराविधृतैकपार्श्वमेकतो निवेश्य निरगमम्। निरगमयं च कुमारम्। अथ यथापूर्वमर्चयित्वा दुर्गामुद्धाटितकपाटः प्रत्यक्षीभूय प्रत्ययहृष्टदृष्टिस्पष्टरोमाञ्चमुद्यताञ्जलिरूढविस्मयं च प्रणिपतन्तीः प्रकृतीरभ्यधाम् 'इत्थं देवी विन्ध्यवासिनी मन्मुखेन युष्मानाज्ञापयति—मया स एष राजसूनुरापन्नः सकृपया शार्दूलरूपेण तिरस्कृत्याद्य वो दत्तः तमेनमद्यप्रभृति मत्पुत्रतया मन्दमातृपक्ष इति परिगृह्णन्तु भवन्तः। अपि च दुर्घटकूटकोटिघटनापाटवप्रकटशाठ्यनिष्ठुराश्मकघटघट्टनात्मानं मां मन्यध्वमस्य रक्षितारम्। रक्षानिर्वेशश्चास्य स्वसेयं सुभ्रूरभ्यनुज्ञाता मह्यमार्यया' इति। श्रुत्वैतत् 'अहो भाग्यवान्भोजवंशः यस्य त्वमार्यादत्तो नाथः' इत्यप्रीयन्त प्रकृतयः। सा तु वाचामगोचरां हर्षावस्थामस्पृशन्मे श्वश्रूः। तदहरेव च यथावद्ग्राहयन्मञ्जुवादिनीपाणिपल्लवम्। प्रपन्नायां च यामिन्यां सम्यगेव बिलं प्रत्यपूरयम्। अलब्धरन्ध्रश्च लोको नष्टमुष्टिचिन्तादिकथनैरभ्युपायान्तरप्रयुक्तैर्दिव्यांशतामेव मम समर्थयमानः, मदाज्ञां

---

यस्यामिति। तया तमालवीथ्या तमालपङ्क्त्या। अवाचोच्चितेष्टका उच्चनीचवध्येष्टकाः तुमुलो व्याकुलरवः। 'तुमुलो व्याकुलरवः' इति महिपः। प्रस्तरः पाषाणः। 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः। अत्येति। गलति गच्छतीत्यर्थः। वर्षवरः। 'षण्ढा वर्षवरः' इत्यमरः। महार्हाण्यमौल्यानि। पट्टानि वसनानि पट्टवस्त्राणि। पूर्वेद्युः पूर्वदिवसे। प्रत्युषसि प्रातःकाले। वैजन्यं विजनस्य

नात्यवर्तत । राजपुत्रस्यार्यपुत्र इति प्रभावहेतुः प्रसिद्धिरासीत् । तं च गुणवत्यहनि भद्राकृतमुपनाय्य पुरोहितेन पाठयन्नीतिं राजकार्याण्यन्वतिष्ठम् । अचिन्तयं च—'राज्यं नाम शक्तित्रयायत्तम् । शक्तयश्च मन्त्रप्रभावोत्साहाः परस्परानुगृहीताः कृत्येषु क्रमन्ते । मन्त्रेण हि विनिश्चयोऽर्थानाम् प्रभावेण प्रारम्भः, उत्साहेन निर्वहणम् । अतः पञ्चाङ्गमन्त्रमूलः, द्विरूपप्रभावस्कन्धः, चतुर्गुणोत्साहविटपः, द्विसप्ततिप्रकृतिपत्रः, षड्गुणकिसलयः, शक्तिसिद्धिपुष्पफलश्च, नयवनस्पतिर्नेतुरुपकरोति । स चायमनेकाधिकरणत्वादसहायेन दुरुपजीव्यः । यस्त्वयमार्यकेतुर्नाम मित्रवर्ममन्त्री स कोसलाभिजनत्वात्कुमारमातृपक्षो मन्त्रिगुणैश्च युक्तस्तन्मतिमवमत्यैव ध्वस्तो मित्रवर्मा, स चेल्लब्धः पेशलम्' इति । अथ नालीजङ्घं रहस्यशिक्षयम्—'तात, आर्यमार्यकेतुमेकान्ते ब्रूहि—'को न्वेष मायापुरुषो य इमां राज्यलक्ष्मीमनुभवति । स चायमस्मद्बालो भुजङ्गेनामुना परिगृहीतः । किमुद्गीर्येत ग्रस्येत वा' इति । स यद्वदिष्यति 'तदास्मि बोध्यः' इति । सोऽन्यदैव मामावेदयत्—'मुहुरुपास्य प्राभृतैः, प्रवर्त्य चित्राः कथाः, संवाह्य पाणिपादम्, अतिविस्रम्भदत्तक्षणं तमप्राक्षं त्वदुपदिष्टेन नयेन । सोऽप्येवमकथयत्—'भद्र, मैवं वादीः । अभिजनस्य शुद्धिदर्शनम्, असाधारणं बुद्धिनैपुणम्, अतिमानुषं प्राणबलं, अपरिमाणमौदार्यम्, अत्याश्चर्यमस्त्रकौशलम्, अनल्पं शिल्पज्ञानम्, अनुग्रहार्द्रं चेतः, तेजश्चाप्यविषह्यमभ्यमित्राणम्, इत्यस्मिन्नेव संनि-

---

भावस्तथा । पटीयांसं श्रेष्ठम् पटहशब्दं दुन्दुभिध्वनिम् । अंसलपुरुषोः । मांसलपुरुषः । 'बलवान्मांसलोंऽसलः' इत्यमरः । 'वर्ष्मांमाभ्या कामबले' इति लघु । प्रत्ययः साक्षात्कारः । हृष्टा हर्षं प्राप्ता दृष्टिर्नेत्रेति । प्रकृतीः प्रजाः आपन्न आपत्प्राप्तः । तिरस्कृत्यान्तर्धार्य । दुघटो घटनाशक्या । कूटं कपटम् । कोटिरग्रम्, संख्या वा । घटना योजना । पाटवं कुशलता । स्वसा भगिनी । अप्रीयन्त प्रीतिमापुः । अगोचरामविषयाम् । दिव्याशतां दिवि भवा दिव्यास्तेषामंशस्तस्य भावस्तत्ताम् । आर्यपुत्रो भवान्पुत्रः ।

पातिनो गुणाः येऽन्यत्रैकैकशोऽपि दुर्लभाः। द्विषतामेष चिरबिल्वद्रुमः, प्रह्वाणां तु चन्दनतरुः, तमुद्धृत्य नीतिज्ञमन्यमश्मकमिमं च राजपुत्रं पित्र्ये पदे प्रतिष्ठितमेव विद्धि। नात्र संशयः कार्यः, इति। तच्चापि श्रुत्वा भूयभूयश्चोपधाभिर्विशोध्य तं मे मतिसहायमकरवम्। तत्सखश्च सत्यशौचयुक्तानमात्यान्विविधव्यञ्जनांश्च गूढपुरुषानुदपादयम्। तेभ्यश्चोपलभ्य लुब्धसमृद्धमत्युत्सिक्तमविधेयप्रायं च प्रकृतिमण्डलमलुब्धतामभिख्यापयन्, धार्मिकत्वमुद्भावयन्, नास्तिकान्कदर्थयन्, कण्टकान्विशोधयन्, अमित्रोपधीरपघ्नन्, चातुर्वर्ण्यं च स्वधर्मकर्मसु स्थापयन्, अभिसमाहारे-

---

शक्तिसिद्धिपुष्पफलश्च। शक्तित्रयं पुष्पं सिद्धित्रयं च फलमिति 'प्रभा : शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः' इति। नय एव वानस्पतिर्नीतितरुः अनेकाधिकरणत्वादनेकप्रकारत्वात्। असहायेन सहायहीनेन। दुरुपजीव्यो दुःखेनोपजीवितुमशक्यः। यस्त्वयं नीतिवृक्षः। कोसलाभिजनत्वात्कोसलवंशत्वात्। 'संततिर्गोत्रजननकुलान्यभिजनान्वयौ' इत्यमरः। मन्त्रिगुणैः प्रधानगुणैः। अवमत्यावगणय्य। स मन्त्री। चेदित्यर्थः। लब्धः प्राप्तः। न्विति वितर्के। पेशलं सुन्दरम्। तातेति। भुजङ्गेन सर्पेण। उद्गीर्यैत। जेतेत्यर्थः न्विममर्थः प्रस्येत वेति भक्षयिष्यति वा उपास्य सेवित्वा। प्राभृतैरुपायनैः। प्रसन्नचित्ताः। संवाह्य 'संवाहनं पुरस्कारः' इति। मिम्रभो विपाकः। भद्र कल्याणेति संबोधनम्। अभिजनस्य कुलस्य। असाधारणम्। महदित्यर्थः। अतिमानुषं मानुषमतिक्रम्य वर्तत इति। अपरिमाणरहितम्। औदार्यमुदारस्य भावस्तथा। अस्त्रकौशलमस्त्रकुशलता। शिल्पज्ञानं रचनाज्ञानम्। अविषह्यं सोढुमशक्यम्। संनिपातिन एकत्रावस्थिताः चिरबिल्वद्रुमो विषद्रुमः। प्रह्वाणामनुरागवताम्। पित्र्यं पितुरिदम्। संशयः संदेहः। भूयोभूयो वारंवारम्। उपधाभिरुपहारैः। तत्सखः स एव सखेति तत्सखः। 'राजाहःसखिभ्यष्टच्' इति टच्। सत्यं सत्यप्रतिज्ञानम्। शौचं शुद्धिः। गूढपुरुषान्गुप्तसेवकान्। कण्टकान्रिपून्। अलुब्धतां लुब्धत्वाभावम्। अभिख्यापयन्प्रकटीकुर्वन्। नास्तिकान्नास्तिक्ययुक्तान्। चातुर्वर्ण्यं चतुर्णां वर्णानां ब्राह्मणादीनां समाहारश्चातुर्वर्ण्यम् अर्थमूलाः अर्थाधीनाः

यमर्थान् अर्थमूला हि दण्डविशिष्टकर्मारम्भाः । न चान्यदस्ति पापिष्ठं तत्र दौर्बल्यात्, इत्याकलय्य योगानन्वतिष्ठम् ॥

इति श्रीदण्डिनः कृतौ दशमकुमारचरिते
विश्रुतचरितं नामाष्टम उच्छ्वासः ।

---

दौर्बल्याद् दुर्बलस्य भावस्तेन । आकलय्य मनसि कृत्वेत्यर्थः । योगान् विविधोपायान् ।

इति दशकुमारचरितव्याख्यायां पदचन्द्रिकाभिधानायां
विश्रुतचरितं नामाष्टम
उच्छ्वासः ।

# महाराजाधिराजश्रीहर्षवर्धनस्य ताम्रशासनम्।

( बांसरवेड़ाग्रामादुपालब्धं द्वाविंशहर्षसंवत्सराङ्कितम् )

ओं स्वस्ति । महानौहस्त्यश्वजयस्कन्धावाराच्छ्रीवर्धमान-कोट्या, महाराजश्रीनरवर्धनस्तस्य पुत्रस्तत्पादानुध्यातः श्रीवज्रिणी-देव्यामुत्पन्नः परमादित्यभक्तो महाराजश्रीराज्यवर्धन स्तस्य-पुत्रस्तत्पादानुध्यातःश्रीमदप्सरेदेव्यामुत्पन्नः परमा—दित्यभक्तो महा-राजश्रीमदादित्यवर्धनस्तस्य पुत्रस्त—पादानुध्यातः श्रीमहासेन-गुप्तादेव्यामुत्पन्नश्चतुस्समुद्रातिक्रान्त – कीर्तिः प्रतापानुरागोपन-

---

## पदचन्द्रिका

लेखोऽयं महाराजाधिराजश्रीहर्षस्य द्वाविंशेऽब्दे ताम्रशासने विन्यस्तः । लेखादौ लेखक ओमिति शब्देन मङ्गलमाचरति । 'ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा, कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभा'विति स्मृतिवचनात् । 'स्वस्ती'त्याशीर्योतनाय । अर्हाणां पूर्वजानां पुण्ययशोऽभिवृद्धये प्रवृत्ताय श्रीहर्षाय देवाः सर्वथा क्षेममावहन्त्विति फलितोऽर्थः ।

महानौहस्त्यश्वेति । महानौहस्त्यश्वजयस्कन्धाराच्छ्रीवर्धमान-कोट्याः श्रीहर्षः समाज्ञापयतीति विप्रकृष्ट व्यस्तानां पदानां वाक्ययोजनार्थमन्वयः ।

तान्यराजो वर्णाश्रमव्यवस्थापनप्रवृत्तचक्र एकचक्ररथ इव प्रजाना-मार्तिहरः परमादित्यभक्तः परमभट्टारकमहाराजाधिराजश्रीप्रभा-करवर्धनस्तस्यपुत्रस्तत्पादानुध्यातः स्मितयशःप्रतानविच्छुरितसक-लभुवनमण्डलः परिगृहीतधनदवरुणेन्द्रप्रभृतिलोकपालतेजाः सत्प-

---

श्रीवर्द्धमानकोटीति सैन्यस्थित्याः शिविरस्य, राज्ञः प्रतिष्ठानस्य वा नामधेयम् । अद्यावध्यननुसंहितोऽयं प्रदेशो विदुषां गवेषणामर्हति । महान्तः पृथुपरिमाणाः प्रचुरसंख्या वा हस्तिनो गजा नावस्तरण्योऽश्वा हया यस्येदृशो यो जयाय हितो विजयशीलो वा स्कन्धावारः सैन्यस्थितोराजधानी वा स्कन्धेन सैन्यसमूहेन व्यूहन नृपतिना वाऽऽध्रियत इति व्युत्पत्तेः—तस्माच्छ्रीवर्धमानकोटी(टि) नामधेयात्स्थानविशेषात् । प्रदेशमिममधिगम्येति याथार्थ्ये ल्यब्लोपे पञ्चमी । एतेन राज्ञः प्रभुशक्तिः कोषदण्डजं वा तेजो लक्ष्यते । महाराजश्रीनरवर्द्धनादारभ्य परमभट्टारकमहाराजाधिराजश्रीहर्षयावद्वर्धनसमाख्यया प्रथितस्य राजवंशस्य नृपानुपूर्वी प्रदर्श्यते । महारजश्रीनरवरधंनस्तस्य पुत्रस्तत्पादाध्यातः श्रीवज्रिणी-देव्यामुत्पन्नः परमादित्यभक्तो महाराजश्रीराज्यवर्द्धन इत्यादिवाक्येषु वाक्यांशेषु वा सर्वत्र बभूवेतिपदमध्याहार्यम् । तस्य पितुः पादाभ्यां चरणाभ्यामथवा पितृपादै-रनुध्यातोऽनुगृहीतः । अथ वंशानुक्रमणी । तद्यथा—नरवर्धनो वज्रिणीदेव्यां राज्ञ्यां राज्यवर्धनं नाम तनयं लेभे । अपरस्य महिषी चादित्यवर्धनं नामात्मजं सुषुवे । महासेनगुप्तादित्यवर्धनयोः प्रभाकरवर्धनः । राज्यवर्धनस्य तनयो मागधगुप्त-वंशजां राजकुमारीं परिणिनायेति सुखमनुमातुम् । यशोमतीप्रभाकरवर्धनयोश्च राज्यवर्धन ( द्वितीय ) हर्षवर्धनौ जज्ञाते । अस्मिन्प्रकरणे मुख्यविशेषणानि—परन उत्कृष्टोऽनन्यो वाऽऽदित्यस्य भगवतः सहस्ररश्मेर्भक्तं उपासकोऽनुध्याता । वर्धनाभिजनस्यालिकरलाञ्छनयोर्दोशपुरवर्मधर्मगौरव राजदायोः सविता कुलदेवता बभूवेत्यनेन गम्यते । नरवर्धनराज्यवर्धनादित्यवर्धनानां महाराजेति प्रभाकरवर्धनराज्यवर्धनद्वितीयहर्षवर्धनानां च परमभट्टारकमहाराजाधिराजेति विरुदद्वयस्य परस्परतुलनया; प्रभाकरवर्धनो वर्धनान्वयमभ्युदयशिखरं प्रापया-मासेति ध्वन्यते । इय च कुलसमृद्धिर्दिनोद्दिनमुपचयमवापेति विशदीकरोति ।

प्रचीयमानं प्रभाकरवर्धनराज्यवर्धनहर्षवर्धनानां सार्थं विशेषणजातकम् ।

चतुरश्चतुःसंख्यान् समुद्रान्दिगवधिभूतानब्धीनतिक्रान्ताऽतिक्रम्य स्थिता

**थोपार्जितानेकद्रविणभूमिप्रदानसंप्रीणितार्थिहृदयोऽतिशयितपूर्वराजचरितो देव्याममलयशोमत्यां श्रीयशोमत्यामुत्पन्नः परमसौगतः सुगत इव परहितैकरतः परमभट्टारकमहाराजाधिराजश्रीराज्यवर्धनः—**

---

कीर्त्तिर्यशो यस्य सः। प्रतापेन प्रभावेण कोषदण्डजया प्रभुशक्त्या,ऽनुरागेणाप्रेम्णा स्नेहवृत्त्या वोपनता वशंगता अन्ये परे राजानो नृपा येन सः। उपनता इत्यस्य स्थानेऽवनतेति पाठान्तरं सम्भवति, तच्च श्रेयः। 'स प्रतापः प्रभावश्च यत्तजः कोषदण्डजम्' इति कोषः। राजाहस्सखिभ्यष्टजिति समासान्तः प्रत्ययः। स च तत्पुरुषविषयोऽप्यत्र बहुव्रीहौ समाश्रितः। वर्णानां ब्राह्मणादीनामाश्रयाणां च ब्रह्मचर्यादीनां चतुर्णां व्यवस्थापने मर्यादायाः स्थापने प्रवृत्तं संलग्नम् (-उपक्रान्तमिति यावत्-) चक्रं रथाङ्गं (-कर्मप्रसार इत्यभिप्रायः-) येन सः। एकमेवाद्वितीयं चक्रं रथाङ्गं यस्य स, एवंविधो रथः स्यन्दनो यस्य स सूर्यस्तद्वत्। **प्रजानां** प्रकृतीनाम्। **आर्त्तिं** क्लेशं पीडां हरत्यपनुदतीत्यार्तिहरः। **परमश्श्रेष्ठो भट्टारको** देवः भट्टं स्वामित्वमृच्छतीति व्युत्पत्तिः। महाराजाधिराजः सम्राट्। शब्दोऽयं यवनानां षाहिषाहानुषाहि स्शाथियानां रञ्शाथियोपाह्वावनुकृत्य निर्मित्य पुनरपि भारिशैवरायींकृतः सम्राड्रूपेण पर्यणमत्। एकचक्ररथ इवेत्यत्रेवशब्देन सवितृप्रभाकरवर्धनयोरुपमा गम्यते। एकरथशब्द आम्नायस्थामादित्यापरपर्यायमेकपात्पदं स्मारयति। सततं भ्राम्यता भास्करेण सह वर्णाश्रमव्यवस्थापनव्यवसायिनो राज्ञः साम्यम्। स्मितं मनाग्घसितमिव यशः कीर्त्तिः, तस्य **प्रतानेन** प्रसारेण **विच्छुरित**मत्यन्तं व्याप्तं परिकलितं धा सकलं निखिलं भुवनस्य भुवो मण्डलं वलयो येन सः। सितेतिपाठे धवलयशः प्रतानेनेति गम्यम्। परिगृहीतमात्मसात्कृतं धनदवरुणेन्द्रप्रभृतीनां कुबेरप्रचेतोवासवादीनां लोकपालानां देवानां तेजः प्रभा येन सः सत्पथेन सुष्ठुमार्गानुसरणेनोपार्जिता अधिगता या **अनेकद्रविणभूमयः** प्रचुरवित्तासंख्यपरभुवश्च तासां प्रदानेनोपहारेण प्रीणितानि सन्तोषितान्यर्थिनां याचकानां हृदयानि मनांसि येन सः। अतिशयितमतिक्रान्तं **पूर्वराजानां** प्राचां नृपाणां चरितमाधिपत्यव्यवहारो येन सः। यशः कीर्तिरस्या अस्तीति यशोमती। अमलं **धवलं च** तद्यशस्तेनतद्वतीत्यमलयशोमती तस्याम्। सुगतो भक्तिरस्येति **सौगतः**। परमश्चासौ सौगत इति परमसौगतो बौद्धश्रेष्ठ इति यावत्। परेषामात्मभिन्नानां

राजानो युधि दुष्टवाजिन इव श्रीदेवगुप्तादयः
कृत्वा येन कशाप्रहारविमुखाः सर्वे समं संयताः।
उत्खाय द्विषतो विजित्य वसुधां कृत्वा प्रजानां प्रियं
प्राणानुज्झितवानरातिभवने सत्यानुरोधेन य· ।

तस्यानुजस्तत्पादानुध्यातः परममाहेश्वरो महेश्वर इव सर्वसत्त्वानुकम्पी · परमभट्टारकमहाराजाधिराजश्रीहर्षोऽहिच्छत्रा·

---

हिते श्रेयस्युपकार एकस्मिन् प्राधान्येन रत आयुक्त इति परहितैकरतः । कीदृशः पुनरसौ राज्यवर्धनः ?—राजान इति पद्येन सविशेषं वर्ण्यते ।

येन खलु वीरेण युधि आहवे, राजानः परे नृपाः कशाया अश्वहस्तताडन्या प्रहारेणाघातेन विमुखा युद्धभूमेः पराङ्मुखा प्रत्त्याविनः कृत्वा विधाय, सर्वे विश्वेऽपि क्रमश्यपरित्यज्येति भावः, समं युगपत्संयता बद्धतामुपगताः । के राजानः ? देवगुप्तादयः । देवगुप्तो मागधानामादित्यसेनस्य गुप्तकुलजः पुत्र इति तर्क्यते । के इव कशाप्रहारविमुखाः कृताः ? दुष्टवाजिन इवोद्दृप्ताश्वा इव । पुनः कीदृशोऽसौ राज्यवर्धनः ? उच्यते—यश्च द्विषतोऽरातीनुत्खाय स्वभूमेर्निष्कास्य समूलमुन्मूल्येति वा, वसुधां वसुन्धरां विजित्य स्वायत्तीकृत्य, प्रजानां जनानां प्रियं सुखावहं किमपि कृत्वाऽनुष्ठायोपकृत्येत्यर्थः, अरातिभवने शत्रुगृहे प्राणानसूनुज्झितवान् जहौ । किं कारणं प्राणत्यागे ?—सत्यानुरोधेन सत्यसन्धतया स्ववचनपरिपालनवृत्या । श्रूयते हि यथा राज्यवर्धनो गौडेन शशाङ्केन निमन्त्रितश्छलेन कपटसौहार्देन व्यापादित इति—अत्र श्रीबाणकृतिहर्षचरितं प्रमाणम् । अथ श्रीहर्षं विशिनष्टि । तस्यैवमुक्तप्रकारस्य राज्यवर्धनस्यानुजः कनीयान् भ्राता । परममाहेश्वरः श्रेष्ठ उमेशभक्तः । महेश्वर इव शिव इव सर्वेषु सकलेषु सत्त्वेषु प्राणिजातेष्वनुकम्पी कृपावान् । [illegible] ऊर्ध्वं मर्कटसागरग्रामस्य सीमाविषयकं किञ्चित्—संवत्सयोऽयमहिच्छत्रानाम्ना भुक्तौ तदन्तर्गतविषयस्य पाश्चिनपथके स्थित आसीत् । अहिच्छत्रयाऽऽधुनिकं संयुक्तप्रान्तीयं रामनगरमभिप्रेतम् । पथको देशव्यवस्थाहितसौकर्याय कृतो ग्रामसंकुलो विषयविभागः प्रतीयते । विषयश्च भुक्तिगत एकदेशः—स च पुरजातम् । पथकेनाद्यतहसीलकाख्यो देशभागस्तुलामभिरोहति, भुक्त्या च जिलेति । [illegible]

भुक्तावङ्गदीयवैषयिकपश्चिमपथकमर्कटसागरे सम्बद्धमर्कटसागरे समुपागतान्महासामन्तमहाराजदौस्साधसाधनिकप्रमातारराजस्था-नीयकुमारामात्योपरिकविषयपतिभटचाटसेवकादीन्प्रतिवासि-जानपदांश्च समाज्ञापयति विदितमस्तु यथायमुपरिलिखितग्रामः

---

प्राचीनशिलालेखादयस्तत्सम्बन्धिन्यष्टिप्पण्यश्च पर्यालोचयितव्याः । अथ मर्कटसागरे कार्यवशात्समुपागतानध्यक्षविशेषान्सम्बोधयति । महासामन्तस्तावत्—महांश्चासौ सामन्तश्चेति महासामन्तः, मुख्यो नन्तराधिपतिः—मुख्यः सीमाबद्धभुवोऽधिष्ठातेति यावत् । समन्तस्य संलग्नैकदेशस्य भूमेरयमिति व्युत्पत्तेः । स्वविषयानन्तरराजोऽपि सामन्त उच्यते । महाराजो हिज-हाइनस् वरिष्ठसाख्यः प्राक्तन आयत्त-राजवाचकइति तर्कयामः । अपि वा महाराजाय नृपतये नियुक्ता दौस्साधसाधनिकाश्च । दोर्भ्यां द्वारि वा साधाय राजरक्षादिनिष्पत्तये साधनान्युपकरणानि विद्यन्ते यस्य स दौस्साधसाधनिको राजपुरुषाध्यक्षो गोपुराध्यक्षो वा । प्रमातार इति प्रमातृशब्दस्य प्राकृतिकं रूपमिति सन्दिह्यते । प्रमातुरपि धातुतो भुवो मापनं भूमापनान्वीक्षणं च कर्म । राजस्थानीयो राज्ञः प्रतिनिधिः सीमान्तप्रदेशैकाधिष्ठाता वाइस-रायसदृशः कश्चित्कर्मचारी । अपि वा कुमारामात्यस्य विशेषणमिदं पदं प्रतिष्ठानसम्बन्धीत्यर्थे युक्तं स्यात् । कुमारामात्य इति राजकीयसेवकविशेषाणां सामान्यं नाम । नायं कुमारस्यः कुमाराणां वाऽमात्यः । प्रत्युत कुमारः सन्, कुमारश्चासौ, आकुमारावस्थाया वाऽमात्यः । प्रस्तरताम्रशासादीनां तुलनात्मकाध्ययनेन विशदी भवति—कुमारामात्योऽन्वयप्राप्तसाचिव्यस्तासु तासु राजकीयप्रजा-सेवासु न्ययोजीति । अस्योदन्तोऽपि पुरातनेतिवृत्तिपरिशीलनेन व्याख्यायते । आदौ राजकुमार एवात्मना, कुमारामात्योऽन्वर्थो बभूव । अत्रोदाहरणं तक्षशिला-राजस्थानीयः स्वपितुराधिराज्ये शशासाशोकः । तदनन्तरं तस्य पुत्रस्तत्पादानुध्यातस्तामेव पित्रा शिष्टपूर्वां तक्षशिलां शशास । सति राजपुत्राभावे तत्स्थाने वा राजकुलजोऽन्यः कोऽपि । तदभावे तत्स्थाने चान्यस्तुल्यकुलजो राजवल्लभो राजक्रियास्वात्मविस्रम्भोऽभियुक्तश्च । एवं कुमारश्चासावमात्यश्च कुमार इवामात्यो बभूव । अद्यतन आइ-सी एस्-पदतुल्यपदाधिकारी कुमारामात्योऽभूदथवा परमेतदधीनस्थराजवाचकतासीद्, यथाऽद्यापि वशंवदा अधीनस्था राजानः सर्वेऽपि कुमारपर्यायं प्रिन्स्-पदमुपलभन्ते, वस्तुतस्तु राजानं प्रतिनिदधतस्तेऽमात्या एव । उपरिको ग्रामसीमाध्यक्षः कश्चित् । विषयपति-

स्वसीमापर्यन्तः सोद्रङ्गः सर्वराजकुलाभाव्यप्रत्यायसमेतः सर्वपरिहृतपरिहारो विषयादुद्धृतपिण्डः पुत्रपौत्रानुगश्चन्द्रार्कक्षितिसमकालीनो भूमिच्छिद्रन्यायेन मया पितुः परमभट्टारकमहाराजा-

---

भुक्तिप्रभागस्यानुराजः । भटा नियमपूर्वकं भृताः परिक्रीता योद्धारः । अत्र तेषामध्यक्षा बोध्याः । चाटाः प्रत्युत न नियमपूर्वं भृता राजवल्लभास्तत्कर्यन्ते । नैते कोषादिगतास्तस्करप्रतारकमहासाहसिकादयः । अपि तु निरंकुशाः स्वामिवल्लभा राजपुरुषाः । उद्धृतं च शब्दकल्पद्रुमे—'चाटतस्करदुर्वृत्तमहासाहसिकादिभिः पीड्यमानाः प्रजा रक्षेत्कायस्थैश्च विशेषतः । तेषां राजवल्लभतयेति । अन्यत्र तु यथासामान्यं चाटाः प्रतारका ये विश्वास्य परधनमपहरन्ति । प्रतिवासिजानपदा अनन्तरजानपदाधिकारिणः । तेभ्योऽप्यादेशोऽयमुद्घुष्यते नास्म सीमाशंसयो भूदिति इत्यमरः ।

विदितमास्वित्यारभ्य राजादेशो यस्यादौ ग्रामं विशेषयन् ग्रामसम्प्रदानसमयानाह । उपरिलिखितश्चासौ ग्रामश्चेति मर्कटसागराभिधः सूच्यते । स्वस्य समिया बद्ध इति ग्रामसीमाबद्ध स्वसीमापर्यन्तः । सोद्रङ्ग उद्रङ्गेण सह वर्तमानः । उद्रङ्गश्च नृपतये समाहृतो वसुधाप्रसूतेः षष्ठांशादिः । सर्वैः सकलैरपि राजकुलाभाव्यप्रत्यायैः समेतो युक्तः । प्रत्यायोऽत्र आजीवनम् । कीदृशास्ते पुनः प्रत्यायाः ? राजकुलेन नृपतिवंशेनाभाव्या अनुपादेयाः । अपित्रा कुलेन कुलागतपरम्पराप्राप्तेनाचारेण—राजसमयमनुसृत्येत्यर्थः सर्वमप्यायजातं, यस्मिन्नास्ति राजभागस्तत्रापि राजवचनात्प्रतिग्रहीतृद्विजयोः स्वामित्वं स्यादित्यभिप्रायः । ब्यूह्लरमहोदयास्तु पदसन्धिमाभाव्याः प्रत्याया इत्येवं विगृह्यार्थान्तरं मन्यन्ते—प्रदानात्पूर्वमपि नृपादिभिराहार्याः प्रत्याया इति । तेन कराजीवनादिनिर्विशेषमधिद्विजयोः राजतन्त्रमुक्ता भूर्यथास्यादित्यर्थः । सर्वः परिहृतो निरस्तः परिहारो विजितद्रव्यादिकरो यस्य सः । अयं चार्थशास्त्रे—'अनुग्रहपरिहारौ चैभ्यः कोषवृद्धिकरौ दद्यात् परिहरो विजितद्रव्यादिकरः । संरक्षाद्यनुग्रहः परिहार इति केचित् । विषयाद्भुक्त्येकदेशविशेषादुद्धृत उन्मुक्तः पिण्डो बलिराजीवनं वा यस्मात्सः । पिण्डशब्दोऽयाजीवनयोः पुंसि नपुंसके चोभयथोऽपि दृश्यते । पुत्रपौत्रानुग उत्तरोत्तरं वंशजानां स्वामित्वगः । चन्द्रस्य विधोरर्कस्य सूर्यस्य, क्षितेः पृथिव्याश्च समकालीनो यावच्चन्द्रादिस्थितिस्थायी—ग्रामोऽस्मिन्नाकल्पान्तावधि प्रतिग्रहीतृकुलजानां प्रभुत्वं प्रवर्ततेति

धिराजश्रीप्रभाकरवर्धनदेवस्य, मातुर्भट्टारिकामहादेवीराज्ञीश्रीयशोमतीदेव्या, ज्येष्ठभ्रातृपरमभट्टारकमहाराजाधिराजश्रीराज्यवर्धनदेवपादानां च पुण्ययशोभिवृद्धये भरद्वाजसगोत्रबह्वृचच्छन्दोगसब्रह्मचारिभट्टबालचन्द्रभद्रस्वामिभ्यां प्रतिग्रहधर्मणाग्रहारत्वेन प्रतिपादितो, विदित्वा भवद्भिः समनुमन्तव्यः, प्रतिवासिजानपदैरप्याज्ञाश्रवणविधेयैर्भूत्वा यथासमुचिततुल्यमेयभागभोगकरहिरण्यादिप्रत्याया एतयोरेवोपनेयाः, सेवोपस्थानं च करणीयमित्यपि च ।

---

भावः । भूमिच्छिद्रन्यायेन भूमिच्छिद्रविधानप्रकारेण । एतद्विधानमर्थशास्त्रस्य द्वितीयाधिकरणे द्वितीयाध्याये सविस्तरमुपन्यस्तम् । एवं च कथमकृष्या भूः प्रबध्येत, कस्मै वा प्रयुज्यतेति विचारणे भूमिविभागप्रकरणस्योपक्रमस्तत्र द्रष्टव्यो—'ऽकृष्यायां भूमौ विवीतानि प्रयच्छेदि' त्यादिः । केचित्तु नाकृष्याया भुवो बलिरधिहार्य इति न्यायमेभिः पदैरवगच्छन्ति । अस्मत्पक्षे तु राजवचनादनाप्यायाः क्षितेः कथं विनियोगः स्यादित्यत्र सर्वथा प्रभुता प्रतिग्रहीत्रोरेवेत्यवबुध्यते । अथ बालचन्द्रभद्रस्वामिनावस्य ग्रामस्य प्रतिग्रहीतारौ विशिष्येते । यौ किल गोत्रेण ब्राह्मणवंशेन भरद्वाजकुलोद्भूतौ । बह्वृचावृग्वेदिनौ । छन्दोगौ सामगीतिषु प्राप्तदाक्षिण्यौ । सब्रह्मचारिणौ सहाध्येतारौ च । प्रतिग्रहधर्मेण स्वीकृतिधर्मेण ब्राह्मणो विशेषं दानमिदमुररीकुर्यादित्याकाङ्क्ष्यते सपर्यासमुदाचारात् । अग्रहारत्वेनाग्रहाररूपतया-ब्राह्मणाय दानार्थं हितो यो ग्रामस्तद्रूपतया । अग्रं ब्राह्मणभोजनं, तदर्थं ह्रियन्ते, राजधनात्पृथक् क्रियन्ते ये क्षेत्रादय इति व्यासात् । प्रतिपादितोऽतिसृष्टो वितीर्ण इति यावत्-ब्राह्मणसात्कृत इति भावः । समनुमन्तव्यः समनुज्ञातव्यः । आज्ञाया अस्यादेशस्य श्रवणे निशमने विधेयैर्वशंवदैः । यथासमुचितं यथार्हं ये तुल्यादिप्रत्यायास्तेऽनयोरभ्यामेवोपनेयाः । तुल्यानि तुलया मेयानि वस्तूनि मेयानि द्रोणादिभाजनविशेषैः प्रमाय देयानि द्रव्याणि । भागः करविशेषो यो राजभिन्ने राजस्थानीयादिभिराहार्यः कार्यसौकर्यहितो बलिः—सम्प्रति ईजमण्ट् इति प्रसिद्धः । भोगो भूम्यादित उपभोगार्थमुपहृतो भागधेयः । उपभोगवस्तुषु विन्यस्तो वा-ऐॅआम्-मॅण्ट् इति प्रसिद्धः । हिरण्यादिर्मुद्रादिरूपेणोपादेयो नियतः करः अपि वा ऽयभागीयो [illegible] बलिः । [illegible] । एवं [illegible]

अस्मत्कुलक्रममुदारमुदाहरद्भिरन्यैश्च दानमिदमभ्यनुमोदनीयम्।
लक्ष्मास्तडित्सलिलबुद्बुदचञ्चलाया दानं फलं परयशः परिपालनं च ॥

कर्मणा मनसा वाचा कर्त्तव्यं प्राणिभिर्हितम्।
हर्षेणैतत्समाख्यातं धर्मार्जनमनुत्तमम् ॥

---

च ( इनकैश् एण्ड् इनकाइण्ड् ) राज्ञ उपानेयं सर्वमपि करजातमिति भावः। सेवया शुश्रूषयोपस्थानमहीसंविधानं वा । संविधानपक्षे षष्ठीतत्पुरुषः श्रेयान्।

अस्मत्कुलेति—अस्मात्कुलक्रमम्—अस्माकं कुलस्य वंशस्य यः क्रम आचार स्तम्। कीदृशं तम् ?—उदारमुदात्तम् उदाहरद्भिरनुकुर्वद्भिः । अन्यैश्च राजभिरस्मद्भिन्नैरवरैश्च नृपैः । इदमस्मदीयं दानं सम्प्राप्तपत्तिरनुमोदनीयमनुमन्तव्यम्। किंनिमित्तं दाने प्रवर्तितव्यमिति पुनराह अयमेव लक्ष्म्याः फलितो निर्वाहः श्रियः फलं सकला निर्वृत्तिरिति पदार्थः—कोऽसौ ? यदिदं तस्या लक्ष्म्याः दानं प्रतिपादनं, परेषां स्वात्मनो भिन्नानां यशसः कीर्त्याः परिपालनं संरक्षणं च। तदेव वित्तं यद् व्ययते, येन च परेषामर्हाणां पूजा विधीयत इति भावार्थः। कीदृश्या लक्ष्म्याः ? तडिद्विद्युत्। सलिलबुद्बुदा जलस्थासका, स्तद्वच्चञ्चलायाश्चपलाया अस्थिराया लक्ष्म्याः।

कर्मणा मनसेति स्पष्टम्। अत्रानुत्तमम्—उत्तमं नास्याद्वर्तत इति विगृह्यते। धर्मार्जनेषूत्तमो विधिरित्यभिप्रायः।

दूतकः प्रणिधिः। ताम्रशासनादिषु स्थितं कस्यचिन्मुख्यकर्मचारिण रूढिसंज्ञा। अस्य दूतकर्म लेखव्यूहनं लेखस्य च राज्ञा प्रमाणीकृतस्य प्रतिगृहीतृ गाक्कारश्च। तस्कार्यपर्यालोचनं वा। प्रमातारो व्याख्याताः। महाप्रमातारः। प्रमातराणां प्रधानाध्यक्षः। महासामन्तस्तद्वत्सामन्तानां मुख्योऽधिष्ठाता। अक्षपटलं गाणिक्याधिकारः—एतन्नियोगो मण्डपश्च। अधिकरणं युक्तिर्विनियोगस्थानं च। तस्याधिकृतः कर्माध्यक्षः। महांश्चासावक्षपटलाधिकृतश्चेति स गाणिक्याधिकारे प्रधानः कुमारामात्यः। उत्कीर्णमुल्लिखितम् ग्रामेसम्प्रातिविषयके ताम्रशासने नियुक्तास्ते ते प्रधानपुरुषा दूतकलेखकमहाक्षपटलाधिकरणाधिकृतादयः

दूतकोऽत्र महाप्रमातारमहासामन्तश्रीस्कन्दगुप्तः । महाक्षपटलाधिकरणाधिकृतमहासामन्तमहाराजभानुसमादेशादुत्कीर्णमीश्वरेणेदमिति । संवत् २०+२ (२२) कार्तिक वदि १ ।

स्वहस्तो मम महाराजाधिराजश्रीहर्षस्य ।

---

स्कन्दगुप्तेश्वरभानुप्रभृतयः । महासामन्तमहाराजो राजस्थानीयः कुमारामात्यः प्रतीयते । अत्र तु स एवाक्षपटलाधिकृतोऽपि स्वयमेव । शिलाप्रस्तरखण्डताम्रशासनादिषु दशाधिका संख्याऽङ्केषु विगृह्याऽलिख्यत इति नियमः सनातन आसीत् । एवं मूललेखे २२=२०२ । स्वहस्तो हस्ताक्षरापरपर्याय आत्मकराङ्कनमिति यावत् ।

# कादम्बर्याम्

## ( शुकनासोपदेशः )

एवं समतिक्रामत्सु केषुचिद्दिवसेषु राजा चन्द्रापीडस्य यौवराज्याभिषेकं चिकीर्षुः प्रतीहारानुपकरणसंभारसंग्रहार्थमादिदेश । समुपस्थितयौवराज्याभिषेकं च तं कदाचिद्दर्शनार्थमागतमारूढविनयमपि विनीततरमिच्छञ्शुकनासः सविस्तरमुवाच ।

तात चन्द्रापीड विदितवेदितव्यस्याधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति । केवलं च निसर्गत एवाभानुभेद्यमरत्नालोकोच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम् ।

---

**उपकरणेति**—उपकरणान्यभिषेकसामग्री तेषां संभाराः समूहास्तेषां संग्रहार्थम् । आरूढविनयं सम्प्राप्तविनयम् । **तातेति**—उपदेष्टव्याभावे किं वृथोपदेशप्रयासेनेति चेत्तत्र हेतुं प्रदर्शयति केवलमित्यादिना भवतीत्यन्तेन । निसर्गतः स्वभावत एव अभानुभेद्यं सूर्यरश्म्यनुच्छेद्यम् । रत्नप्रभयापि दूरीकर्तुमशक्यम् । प्रदीपालोकेनापि नाशानर्हम् । अत एवातिगहनं तमो यौवनप्रभवं विचारशक्त्यावरकम् । समानभावः काव्यादर्शे-अरत्नालोकसंहार्यमवार्यं सूर्यरश्मिभिः । दृष्टिरोधकरं यूनां यौवनप्रभवं तमः ॥ इति । न विद्यते परिणामे वयःपरिणत्यां

अपरिणामोपशमो दारुणो लक्ष्मीमदः । कष्टमनञ्जनवर्तिसाध्यमपरमैश्वर्यतिमिरान्धत्वम् । अशिशिरोपचारहार्योऽत्यन्ततीव्रो दर्पदाहज्वरोष्मा । सततममूलमन्त्रगम्यो विषमो विषयविषास्वादमोहः । नित्यमस्नानशौचवध्यो बलवान्रागमलावलेपः । अजस्रमक्षपावसानप्रबोधा घोरा च राज्यसुखसंनिपातनिद्रा भवति । इत्यतो विस्तरेणाभिधीयसे । गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वं चेति महतीयं खल्वनर्थपरम्परा ।

---

परिणामेन वा उपशमः शान्तिरस्य । यौवनमदस्य वयःपरिणामे ओषध्यादीनां च परिणामेन विकृत्युपशमो भवति । अयं तु न तथेति दारुणः । तिमिरं नेत्ररोगविशेषः । तज्जनितान्ध्यं विडालादिवसाञ्जनवर्त्या नश्यति । परं, ऐश्वर्यतिमिरान्ध्यमञ्जनवर्तिसाध्यं न भवतीति तथा । तदुक्तमष्टाङ्गहृदये रसेन्द्रभुजगौ तुल्यौ तयोस्तुल्यमथाञ्जनम् । ईषत्कर्पूरसंयुक्तमञ्जनं तिमिरापहम् ॥ इति । शिशिरोपचारैर्हार्य उपशम्यो न भवतीति तथा । दर्प एव दाहज्वरस्तस्योष्मा । विषया एव विषं तस्यास्वादो भोगस्तस्माद्यो मोहो मूर्च्छा । मूलमोषधीनां मन्त्राश्च । एतद्द्वयोपलक्षिता मणिमधुकरादिविषोत्तारणहेतवश्च । तेषां गम्यः साध्यो न भवतीति तथा । विषादिजन्यो मोहो मणिमन्त्रौषधिप्रभावाद्दूरीभवति । अयं तु न तथेति भावः । रागो विषयतृष्णा स एव मलः पङ्कस्तस्यावलेपो लेपनम् । स्नानमभिषेकः । शौचं शुचिक्रिया ताभ्यां वध्यो विनाश्यो न भवतीति तथा । अन्यमललेपनं तु जलादिना प्रक्षालनाद् दूरीभवति । अयं तु न तथेति भावः । सामान्यनिद्राया निशावसाने प्रबोधो भवति । परं राज्यसुखमेव संनिपातनिद्रा संनिपातज्वरो यथा प्राणहानिकरस्तथा हानिकरी निद्रा । यद्वा राज्यसुखानां संनिपातः समूहः राज्यसुखेषु सम्यङ्निपातः पतनम् । तदुपभोग इत्यर्थः । वा स एव निद्रा सा । नास्ति क्षपावसाने निशान्ते प्रबोध उत्थितिर्यस्याः सा । अत एव घोरा भयावहा । **गर्भेति**—गर्भात्प्रभृति गर्भसंभवादारभ्येश्वरत्वं धनसम्पन्नता । अप्रतिरूपत्वमसमसौन्दर्यत्वम् । अविनयानां दुश्चेष्टितानाम् । आयतनं स्थानम् । समवायः समुदायः । उक्तं च हितोपदेशे—यौवनं धनसम्पत्तिः प्रभुत्वमविवेकता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥ इति । उक्तमेव विशदीकरोति **यौवनेति**—शास्त्रमेव जलं तेन यत्प्रक्षालनं तेन निर्मलापि निर्गतोऽज्ञानरूपमलो यस्यास्तादृश्यपि कालुष्यमुपयाति सदसद्विवेकाक्षमा भवतीत्यर्थः । सरागा रागेण सह वर्तमाना । रागो रक्तत्वमिति

सर्वाविनयानामेकैकमप्येषामायतनं किमुत समवायः। यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालननिर्मलापि कालुष्यमुपयाति बुद्धिः। अनुज्झितधवलतापि सरागैव भवति यूनां दृष्टिः। अपहरति च वात्येव शुष्कपत्रं समुद्भूतरजोभ्रान्तिरतिदूरमात्मेच्छया यौवनसमये पुरुषं प्रकृतिः। इन्द्रियहरिणहारिणी च सततमतिदुरन्तेयमुपभोगमृगतृष्णिका। नवयौवनकषायितात्मनश्च सलिलानीव तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः। नाशयति च दिङ्मोह इवोन्मार्गप्रवर्तकः पुरुषमत्यासङ्गो विषयेषु। भवादृशा एव भवन्ति भाजनान्युपदेशानाम्। अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति

---

विरोधः। पक्षे रागो विषयाभिलाष इति परिहारः। वात्या वातसमूहः। 'पाशादिभ्यो यः' इति यः। समुद्भूता रजोगुणेन भ्रान्तिर्भ्रमो यस्याम्। रजोगुणो हि रागादीनामुद्भवः। तदुक्तं भगवद्गीतासु-रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्। इति। लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा। रजस्येतानि जायन्ते विवृद्धे भरतर्षभ॥ इति च। वात्यादिसमुद्भूता रजसो धूल्या भ्रान्तिर्भ्रमणं यस्यां तथा। प्रकृतिः शरीरारम्भकत्रिगुणावस्था। सा हि सत्त्वरजस्तमसामुत्कर्षापकर्षवशान्नरं सदसत्कर्मणि प्रवर्तयति। इन्द्रियाणि करणान्येव हरिणास्तेषां हारिणी विलोभिनी। उपभोगः शब्दस्पर्शादिविषयोपभोग एव मृगतृष्णिका मरुमरीचिका। दुरन्ता दुःखावसाना। मरीचिकां वीक्ष्य मृगैर्यथा जलभ्रान्त्या तृष्णार्तैर्भ्रम्यत एव केवलं न च लभ्यते तथा विषयसुखास्वादलोलुपैर्विषयसेवनसुखभ्रान्त्या भ्रम्यत एव न सुखं लभ्यते केवलं दुःखाकुलैरेव स्थीयते। अतो दुःखपरिणामा विषयतृष्णेति भावः। कषायितात्मनो विकृतात्मनः। नवयौवनविकृतं हि मनो यथावद्वस्तुरूपग्रहणेऽक्षमं सद्विषयोपभोगेऽसदपि सुखं सदिव पश्यतीति भावः। सलिलेति—'यथा कषायद्रव्येण हरीतक्यादिना अमधुराण्यपि जलानि ( सविशेषं ) मधुराणि स्युः' इति भानु०। अत्यासङ्गोऽत्यन्तासक्तिः। दिङ्मोहो दिशां भ्रान्तिः। उन्मार्गेति—उत्क्रान्तो मार्गादुन्मार्गः कुपथस्तत्र

सुखमुपदेशगुणाः। गुरुवचनममलमपि सलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्य। इतरस्य तु करिण इव शङ्खाभरणमाननशोभासमुदायमधिकतरमुपजनयति। हरति च सकलमतिमलिनमप्यन्धकारमिव दोषजातं प्रदोषसमयनिशाकर इव गुरूपदेशः। प्रशमहेतुर्वयःपरिणाम इव पलितरूपेण शिरसिजजालममलीकुर्वन्गुणरूपेण तदेव परिणमयति। अयमेव चानास्वादितविषयरसस्य ते काल उपदेशस्य। कुसुमशरशरप्रहारजर्जरिते हि हृदये जलमिव गलत्युपदिष्टम्। अकारणं च भवति दुष्प्रकृतेरन्वयः श्रुतं वाविनयस्य। चन्दनप्रभवो न दहति किमनलः। किंवा प्रशमहेतुनापि न प्रचण्डतरीभवति बडवानलो

---

प्रवर्तयतीति तथा। पक्षे दिङ्मोहो दिग्विषयमज्ञानं यथा पुरुषमुन्मार्गेऽपथे प्रवर्तयति। भाजनानि पात्राणि। क्रिया हि वस्तूपहिता प्रसीदतीति भावः अपगता मलाः संशयविपर्ययमोहादिरूपा यस्मात्। पक्षे मलः कालुष्यम्। तदुक्तं— प्रभवति शुचिर्बिम्बोद्ग्राहे मणिर्न मृदां चयः। इति। 'धीरेषु सत्कविवचो लभते विकासम्।' इति च अभव्यस्य—भवतीति भव्यः साधुः। 'भव्यगेय-' इत्यादिना कर्तरि निपातः। स न भवतीति तस्यासाधोः। यद्वा अयोग्यस्य। 'भव्यं शुभे च सत्ये च योग्य' इति कोषः। कुशिष्यो हि गुरूपदेशं मलिनयतीति भावः। शङ्खाभरणं—हस्तिनां दृष्टिदोषशमनार्थं शङ्खाभरणं कर्णे बध्यते इति प्रसिद्धिः। हरतीति—हिताहितमार्गोपदेष्टा गुरुस्तस्योपदेशः शिक्षा। प्रदोषसमयनिशाकरोऽतिमलिनमतिकृष्णमप्यन्धकारं यथापनयति तथाऽतिमलिनमपि दोषजातं रागद्वेषादिदोषसमूहं हरति। पुनश्च वयःपरिणामो वार्द्धकं शरीरधातूनामपचयात्कामादीनां प्रशमस्य हेतुः कारणं भवन् शिरसिजजालममलीकुर्वन् धवलीकुर्वन् पलितं जरसा शौक्ल्यं तद्रूपेण परिणमयति विकुरुते तथा गुरूपदेशोपि दोषजातममलीकुर्वन् प्रशमहेतुरिन्द्रियनिग्रहकारणं च सन् गुणरूपेण परिणमयति परिपाकं नयति। अकारणमिति—दुष्प्रकृतेर्दुरात्मनः अन्वय आभिजात्यं श्रुतं ज्ञानं वा विनयस्य अकारणं कारणं न भवतीति नञो व्यत्यासेन योजना। उक्तं च हितोपदेशेन—धर्मशास्त्रं पठतीति कारणं न चापि वेदाध्ययनं दुरात्मनः। स्वभाव

वारिणा। गुरूपदेशश्च नाम पुरुषाणामखिलमलप्रक्षालनक्षममजलं स्नानमनुपजातपलितादिवैरूप्यमजरं वृद्धत्वमनारोपितमेदोदोषं गुरूकरणमसुवर्णविरचनमग्राम्यं कर्णाभरणमतीतज्योतिरालोको नोद्वेगकरः प्रजागरः। विशेषेण तु राज्ञाम्। विरला हि तेषामुपदेष्टारः। प्रतिशब्दक इव राजवचनमनुगच्छति जनो भयात्। उद्दामदर्पश्वयथुस्थगितश्रवणविवराश्चोपदिश्यमानमपि ते न शृण्वन्ति। शृण्वन्तोऽपि च गजनिमीलितेनावधीरयन्तः खेदयन्ति हितोपदेशदायिनो गुरून्। अहङ्कारदाहज्वरमूर्छान्धकारिता विह्वला हि राजप्रकृतिः। अलीकाभिमानोन्मादकारीणि धनानि। राज्यविषविकारतन्द्राप्रदा राजलक्ष्मीः।



---

एवात्र तथातिरिच्यते यथा प्रकृत्या मधुरं गवां पयः॥ इति। प्रकारान्तरेण गुरूपदेशमेव स्तौति गुरूपदेशश्चेति—अजलं जलं विनापि। ०प्रक्षालनसमर्थम्। तथा च गुरूपदेशोऽजरं जराव्यतिरेकेणापि वृद्धत्वं तत्कार्यकरणात्। तथा चास्मिन्पलितादयो विरूपताकारिणो दोषा न प्रादुर्भवन्तीत्यहो महिमा गुरूपदेशस्य। एतदेव परमार्थतो वार्द्धकं यदाह मनुः—न तेन वृद्धो भवति येनास्य पलितं शिरः। यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः॥ इति। पुनश्च अनारोपितोऽकारितो मेदोदोषो येनैवंभूतं गुरूकरणं स्थूलीकरणम्। अन्यत्र स्थूलीभवने हि मेदोपचयदोषो भवतीति प्रसिद्धम्। नास्ति सुवर्णस्य विरचनं घटना यस्मिन्नेतादृक् कर्णाभरणं कर्णभूषणमग्राम्यं सुन्दरं च। अतीतं ज्योतिर्येन तादृश आलोकः। परोक्षार्थदर्शनेऽन्यतेजःपरिभावनपूर्वं किमप्यान्तरमेतज्ज्योतिरित्यर्थः। यद्वा अतीतं गतं ज्योतिर्यस्मात्। अयं प्रजागरः सकलार्थेषु जागरूकतयावस्थानम्। न तु प्रजागरो जागरणं तद्वदुद्वेगकरः संतापदः। विरला इति-प्रायः सर्वे राजच्छन्दानुवर्तिन एव भवन्तीति भावः। तदेव स्पष्टयति प्रतिशब्दकः प्रतिध्वनिः। दाम्न उद्गत उद्दामा उत्कटो यो दर्पोऽहङ्कारस्तेन यः श्वयथुः शोथस्तेन स्थगितं पिहितं श्रवणविवरं कर्णच्छिद्रं येषाम्। शृण्वन्तः केवलमाकर्णनव्यापारभाजो न त्ववधारयन्त इत्यर्थः। अत एव गजनिमीलितेन गजस्य यन्निमीलनं नेत्रसंकोचस्तद्वत्स्वगौरवचिन्तास्तिमितलोचना इत्यर्थः। खेदयन्त्याकुलीकुर्वन्ति। अहंकार एव दाहज्वरः

आलोकयतु तावत्कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम्। इयं हि सुभटखड्गमण्डलोत्पलवनविभ्रमभ्रमरी लक्ष्मीः क्षीरसागरात्पारिजातपल्लवेभ्यो रागमिन्दुशकलादेकान्तवक्रतामुच्चैःश्रवसश्चञ्चलतां कालकूटान्मोहनशक्तिं मदिराया मदं कौस्तुभमणेरतिनैष्ठुर्यमित्येतानि सहवासपरिचयवशाद्विरहविनोदचिह्नानि गृहीत्वेवोद्गता। न ह्येवंविधमपरमपरिचितमिह जगति किञ्चिदस्ति यथेयमनार्या। लब्धापि खलु दुःखेन परिपाल्यते। दृढगुणपाशसंदाननिष्पन्दीकृतापि नश्यति। उद्दामदर्पभटसहस्रोल्लासितासिलतापञ्जरविधृताप्यपक्रामति। मदजलदुर्दिनान्धकारगजघटितघनघटापरिपालितापि प्रपलायते। न परिचयं रक्षति। नाभिजनमीक्षते। न रूपमालोकयते। न कुलक्रममनुवर्तते। न शीलं पश्यति। न वैदग्ध्यं गणयति। न श्रुतमाकर्णयति। न धर्ममनुरुध्यते।

---

संतापकारी ज्वरस्तेन या मूर्च्छा तयान्धकारिता लुप्तसंज्ञा। विह्वला विक्लवा। राजप्रकृती राजस्वभावः। अलीको मिथ्या योऽभिमानो गर्व आत्मन्युत्कर्षारोपो वा स एवोन्मादो व्याधिविशेषः। तदुक्तं सुश्रुतेन मदयन्त्युद्धता दोषा यस्मादुन्मार्गमाश्रिताः। मानसोऽयमतो व्याधिरुन्मादपरिकीर्तितः॥ इति। यद्वाऽलीकाभिमानेन य उन्मादश्चित्तविभ्रमस्तं कुर्वन्तीत्येवंशीलानि। राज्यमेव विषं तेन यो विकारो विकृतिस्तेन कृता या तन्द्रा प्रमीला तत्प्रदा। **आलोकयत्विति**-आलोकयतु यथार्थस्वरूपम् विचारयतु। कल्याणं श्रेयस्तस्मिन्नभिनिवेश इष्टसम्पादने आग्रहो यस्य। **सुभटेति**—सुभटा विक्रान्ता योद्धारस्तेषां खड्गमण्डलमेवोत्पलवनं तत्र यो विभ्रमो विलास इतस्ततः संचारश्च तत्र भ्रमरी। अनेन तस्याश्चाञ्चल्यं कठोरता चोक्ता। **क्षीरेति**—यथा कश्चिद्देशान्तरं गन्तुमिच्छन्निष्टजनवियोगं सोढुं सर्वथाऽसमर्थो विरहविनोदनार्थं किमपि तत्स्मृतिहेतु वस्त्वादाय गच्छति तथेयमपि सहवासाद्यः परिचयः। स्नेह इति यावत्। तद्वशात्पारिजातादीनां विरहविनोदचिह्नान्येतान्यादाय सागरादुद्गतेत्यन्वयः। कानि तानीत्यपेक्षायामाह—पारिजातपल्लवेभ्यो रागमारुण्यमनुरागश्च। पारिजातकुसुमानां रागो यथाऽस्थिरस्तथा लक्ष्म्यनुरागोऽपि। कस्मिंश्चिदपि दृढभावं न बध्नातीति भावः। उक्तं च विशाखदत्तेन—'मूर्खान् द्वेष्टि न गच्छति

न त्यागमाद्रियते । न विशेषज्ञतां विचारयति । नाचारं पालयति । न लक्षणं प्रमाणीकरोति । गन्धर्वनगरलेखेव पश्यत एव नश्यति । अद्याप्यारूढमन्दरपरिवर्तावर्तभ्रान्तिजनितसंस्कारेव परिभ्रमति । कमलिनीसञ्चरणव्यतिकरलग्ननलिननालकण्टकेव न क्वचिन्निर्भरमाबध्नाति पदम् । अतिप्रयत्नविधृतापि परमेश्वरगृहेषु विविधगन्धगजगण्डमधुपानमत्तेव परिस्खलति । पारुष्यमिवोपशिक्षितुमसिधारासु निवसति । विश्वरूपत्वमिव ग्रहीतुमाश्रिता नारायणमूर्तिम् । अप्रत्ययबहुला च दिवसान्तकमलमिव समुपचितमूलदण्डकोषमण्डलमपि मुञ्चति भूभुजम् ।

---

प्रणयितारमत्यन्तविद्वत्स्वपि ।' इति । एवमितरत्र । वक्रतां कुटिलतां प्रातिकूल्यं च । अनेन तस्या दुराराध्यत्वं सूचितम् । उक्तं च तेनैव कविना—'श्रोत्रलंध्यप्रसरेव वेशवनिता दुःखोपचर्या भृशम् ।' इति । चञ्चलताम्—रहोऽस्थिरतां च । लक्ष्म्याश्चाञ्चल्यं तु तथा प्रसिद्धं यथा 'चञ्चला' इति तस्या नामापि रूढम् । 'चञ्चला तु तडिल्लक्ष्म्योः' इति मेदिनी । आह च कालिदासः—'येन श्रियः संश्रयदोषरूढं स्वभावलोलेत्ययशः प्रमृष्टम् ।' इति । कालकूटं विषम् । अस्योत्पत्तिः भावप्रकाशे—देवासुररणे देवैर्हतस्य पृथुमालिनः । दैत्यस्य रुधिराज्जातस्तरुरश्वत्थसन्निभः । निर्यासः कालकूटोऽस्य मुनिभिः परिकीर्तितः ॥ इति । मोहनशक्तिं मूर्च्छोत्पादनसामर्थ्यमन्यवशीकरणसामर्थ्यं च । एतदनुरोधात्केनापि कवयितम् 'चाञ्चल्यमुच्चैःश्रवसस्तुरङ्गात्कौटिल्यमिन्दोर्विषतो विमोहः । एतच्छ्रियाशिक्षि सहोदरेभ्यो न वेद्मि कस्माद्गुणवद्विरोधः ॥' इति । उक्तं च 'कोऽर्थान्प्राप्य न गर्वित' इति । अपरिचितं परिचयनिरपेक्षम् । एतदेवोक्तं परस्तात् 'न परिचयं रक्षति' इति । दृढं यद्गुणाः शौर्यादयः । यद्वा 'सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः षड्गुणा' इति नीतिशास्त्रसंमता गुणाः । ते एव पाशास्तैः संदानं बन्धनं तेन निष्पन्दीकृता निश्चलीकृता । उद्दामा उत्कटो दर्पोऽभिमानो येषामेवंविधैर्भटसहस्रैरुल्लासिता या असिलता ता एव पञ्जरं तत्र विधृतापि । मदेति-दुर्दिनशब्देनात्र वर्षो लक्ष्यते । मदजलदुर्दिनेन दानवारिवर्षेणान्धकारो येषां ते । मदक्षरणमलिनगण्डा इत्यर्थः । एवंविधानां गजानां घनघटाभिः परिपालिता । लक्ष्मीः परिचयाद्यनुरोधान्नैवैकत्र तिष्ठति केवलं स्वच्छन्दमेवानुवर्तते इत्याह न परिचयमित्यादिना । कुलक्रमम्-कुलक्रमेणागताहं कथमकस्मादन्यत्र गच्छामीति नैव

लतेव विटपकानध्यारोहति । गङ्गेव वसुजनन्यपि तरङ्गबुद्बुदचञ्चला । दिवसकरगतिरिव प्रकटितविविधसंक्रान्तिः । पातालगुहेव तमोबहुला । हिडिम्बेव भीमसाहसैकहार्यहृदया । प्रावृडिवाचिरद्युतिकारिणी । दुष्टपिशाचीव दर्शितानेकपुरुषोच्छ्राया स्वल्पसत्वमुन्मत्तीकरोति । सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति जनम् । गुणवन्तमपवित्रमिव न स्पृशति । उदारसत्त्वममङ्गलमिव न बहु

---

विचारयतीति भावः श्रुतं शास्त्रज्ञानम् । अनुबुध्यते जानाति । लक्षणं शरीरगतं चिह्नं तिलकादि सामुद्रिकोक्तम् । गन्धर्वनगरं खपुरम् । दृग्भ्रमादाकाशे उदितं नगरम् । तच्चाशुभसूचकमिति शास्त्रकारा मन्यन्ते । तदुक्तं बृहत्संहितायाम्–"गन्धर्वनगरमुत्थितमापाण्डुरमशनिपातवातकरम् । दीप्ते नरेन्द्रमृत्युर्वामेऽरिभयं जयः सव्ये ॥ अनेकवर्णाकृति खे प्रकाशते पुरं पताकाध्वजतोरणान्वितम् । यदा तदा नागमनुष्यवाजिनां पिबत्यसृग्भूरि रणे वसुन्धरा" ॥ इति । तस्य लेखा सीमा । आरूढो मन्दरस्य परिवर्तन भ्रमणेन य आवर्तोऽम्भसां भ्रमस्तस्मिन्या भ्रान्तिर्भ्रमणम् । लक्ष्म्या इत्यर्थः । तया जनितः संस्कार आवर्तभ्रमरूपो यस्याः । लक्ष्मीः क्वापि निर्भरं पदं न बध्नात्यतस्तत्कारणमुत्प्रेक्षते-कमलिनीषु संचरणव्यतिकरेण संचारयोगेन लग्ना नलिननालस्य कण्टका यस्याः । परमेश्वरा राजानो वा धनिका वा । पारुष्यं कठिनताम् । अप्रत्ययबहुला अविश्वासप्रचुरा । दिवसावसाने यत्कमलं तद्यथा मुञ्चति तथा भूभुजं मुञ्चति । दिवसावसाने हि कमलमपश्रि भवति । उभयोः साम्यमाह **समेति**-सम्यगुपचितानि वृद्धिं प्रापितानि मूलं मूलदेशः । दण्डः सेना, यद्वा मूलदण्ड इत्येकपदं मौलं सैन्यम् । अत्र कौटिल्यः-तत्र मौलं भृतश्रेणीमित्राटवीबलानामन्यतममलब्धदेशकालं दण्डं दद्यात् । इति । यद्वा दण्डो दमो राजशासनतन्त्राङ्गम् । उक्तं च कामन्दकेन-'दण्डो दम इति ख्यातस्तात्स्थ्याद्दण्डो महीपतिः' । 'त्रिवर्गं वर्धयत्याशु राज्ञो दण्डो यथाविधि ।' इति । मनुरप्याह-दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति । दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ इति । कोषो भाण्डागारम् । मण्डलं देशः । द्वादशराजकं वा । 'स्यान्मडलं द्वादशराजके च देशे च बिम्बे च कदम्बके च ।' इति विश्वः । द्वादशराजमण्डलं तु मल्लिनाथेन शिशु व. स, २ श्लो. ८१, रघु वं० स. ९ श्लो. १५, टीकायां व्याख्यातं तत्रैव द्रष्टव्यमिह विस्तरभिया नोच्यते । इत्येतानि

मन्यते। सुजनमनिमित्तमिव न पश्यति। अभिजातमहिमिव लङ्घयति। शूरं कण्टकमिव परिहरति। दातारं दुःस्वप्नमिव न स्मरति। विनीतं पातकिनमिव नोपसर्पति। मनस्विनमुन्मत्तमिवोपहसति।

परस्परविरुद्धं चेन्द्रजालमिव दर्शयन्ती प्रकटयति जगति निजं चरितम्। तथा हि। सततमुष्माणमारोपयन्त्यपि जाड्यमुपजनयति। उन्नतिमादधानापि नीचस्वभावतामाविष्करोति। तोयराशिसंभवापि तृष्णां संवर्धयति। ईश्वरतां दधानाप्यशिव-

---

यस्य। पक्षे मूलं कन्दादि, दण्डो नालं, कोषमण्डलं कुड्मलसमूहश्च। विटा नायकसहायभेदाः-संभोगहीनसंपद्विटस्तु धूर्तः कलैकदेशज्ञः। वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्। इत्युक्तलक्षणाः। जारा वा तान्पान्तीति। विटपास्त एव विटपकास्तान्। नीचसङ्गमप्रणयिनीत्यर्थः। पक्षे विटपकान् वृक्षान्। वसु द्रव्यं तज्जननी। पक्षे अष्टवसूनां जननी। गङ्गा किल वसिष्ठशापान्मानुषत्वमुपागतानष्टवसून् जनयामास। तत्कथा म. भा. आ. प. ९७ अ. द्रष्टव्या। तरङ्गबुद्बुदवच्चञ्चला तैश्चञ्चला च। संक्रांतिः वस्तुनेच्छासम्बन्ध इति भा०। दशाविपर्यया वा। पक्षे राश्यन्तरगमनम्। तमोबहुला तमोगुणविकारप्रचुरा। पक्षे तमोऽन्धकारः। हिडिम्बा हिडिम्बासुरस्वसा। भीममतिकठिनं साहसमेवैकं तेन हार्यं हृदयं यस्याः। पक्षे भीमो वृकोदरः। तदुक्तमादिपर्वणि-मया ह्युत्सृज्य सुहृदः स्वधर्मं स्वजनं तथा। वृतोयं पुरुषव्याघ्रस्तव पुत्रः पतिः शुभे॥ इति। अचिरा द्युतिः प्रकाशः शोभेति यावत्। पक्षे अचिरद्युतिर्विद्युत् दर्शितोऽनेकपुरुषाणामुच्छ्रायोऽभ्युन्नतिर्यया। पक्षे पुरुष ऊर्ध्वहस्तनरमानम्। प्रकटीकृतानेकपुरुषदघ्नशरीरेत्यर्थः। अल्पसत्त्वमधीरप्रकृतिम्। ईर्ष्याया-अनेन सपत्नीभाव उक्तः। प्रायेण हीश्वरा मूर्खा विद्वांसश्च निर्धना भवन्तीति भावः। तदुक्तम्-'कुटिला लक्ष्मीर्यत्र प्रभवति न सरस्वती वसति तत्र।' इति। उदारसत्त्वं महाशयम्। अनिमित्तमशुभचिह्नम्। इन्द्रजालं मन्त्रौषधादिना अन्यथा स्थितस्य वस्तुनोऽन्यथादर्शनम्। सततेति-उष्मशैत्ययोर्विरुद्धस्वभावत्वाद्विरोधः। परिहारपक्षे उष्मा धनतेजः। जाड्यं जडता मौर्ख्यं वा। उन्नतिमुच्छ्रायं धारयन्त्यपि नीचो ह्रस्वः स्वो भावो भवनं तस्य भावस्तत्तां प्रकटयतीति विरोधः। परिहारपक्षे उन्नतिरुत्कर्षः। नीचस्वभावता कुत्सितकर्मता। तृष्णां परिहारपक्षे धनाशाम्।

प्रकृतित्वमातनोति । बलोपचयमाहरन्त्यपि लघिमानमापादयति । अमृतसहोदरापि कटुकविपाका । विग्रहवत्यप्यप्रत्यक्षदर्शना । पुरुषोत्तमरतापि खलजनप्रिया । रेणुमयीव स्वच्छमपि कलुषीकरोति । यथा यथा चेयं चपला दीप्यते तथा तथा दीपशिखेव कज्जलमलिनमेव कर्म केवलमुद्वमति । तथाहीयं संवर्धनवारिधारा तृष्णाविषवल्लीनां, व्याधगीतिरिन्द्रियमृगाणां, परामर्शधूमलेखा सच्चरितचित्राणां, विभ्रमशय्या मोहदीर्घनिद्राणां, निवासजीर्णवलभी धनमदपिशाचिकानां, तिमिरोद्गतिः शास्त्रदृष्टीनां, पुरःपताका सर्वाविनयानामुत्पत्तिनिम्नगा क्रोधावेगग्राहाणामापानभूमिर्विषयमधूनां, संगीतशाला भ्रूविकारनाट्यानामावासदरी दोषाशीविषाणामुत्सारणवेत्रलता सत्पुरुषव्यवहाराणामकालप्रावृड्गुणकलहंसकानां, विसर्पणभूमिर्लोकापवादविस्फोटकानां, प्रस्तावना कपटनाटकस्य, वध्यशाला साधुभावस्य, राहुजिह्वा धर्मेन्दु-

---

ईश्वरतां शिवप्रकृतित्वम् । पक्षे ईश्वरतां प्रभुताम्, अशिवमशुभं च । बलवृद्धिमादधानापि लघिमानमशक्ततां करोतीति विरोधः । परिहारस्तु बलं सैन्यमित्यर्थाल्लघिमानं कार्पण्यमित्यर्थाद्वा । अमृतं पीयूषम् । कटुको जिह्वाकटुर्विपाको रसो यस्या इति विरोधः । परिहारस्तु कटुको दुःखदायी विपाकः परिणामो यस्या इत्यर्थात् । विग्रहवती शरीरधारिणी । परिहारपक्षे कलहकारिणी । पुरुषोत्तमेपूत्तमपुरुषेषु रतापि खलजनाः प्रिया यस्या इति विरोधः । परिहारपक्षे पुरुषोत्तमो विष्णुः । रेणुमयी पांसुमयी रजोगुणमयी वा । चपला चञ्चला अविमृश्यकारिणी च । दीप्यते स्फुरति स्वप्रभावमाविष्करोति । कज्जलवन्मलिनं कृष्णं, पक्षे कज्जलमेव मलिनं कर्म । संवर्धनवारिधारा पोषकजलधारा । व्याधगीतिः—मृगयाजीवा हि गानप्रियान्हरिणान्गीतैराकृष्य घ्नन्ति । तद्वदियमपि इन्द्रियहरिणान्विषयाभिमुखमाकृष्य विनाशयति । सच्चरितान्येव चित्राणि । तेषां परामृश्यतेऽनेनेति परामर्शः प्रोञ्छनं तदर्थं धूमलेखा । 'लोके: कफनिवृत्त्यर्थं द्रव्यान्तरस्य धूमपानं कृत्वा पश्चात्स एवोद्गीर्यते । तत्स्पर्शादालेख्यं विनश्यतीति भावः । इति भानु० । विभ्रमशय्या विलासशयनम् । मोहः कर्तव्याकर्तव्यविचाराभावरूपः स एव दीर्घनिद्रा । लक्ष्म्या मोहिता ह्यस्यां चिरं प्रतिबोधरहिताः शेरते । अतो दीर्घत्वम् । मोहविकारापेक्षया बहुवचनम् । निवासेति—जीर्णगृहेष्वेव पिशाचादयो निवसन्तीति प्रसिद्धम् । तिमिरं नेत्ररोगविशेषः । निम्नगा नदी । क्रोधः पराभिष्टाभिलाषणानिष्टविषयप्रद्वेषहेतुकश्चित्तवृत्तिविशेषः । स्वकामात्कृताश्चित्प्रतिहन्य-

मण्डलस्य । न हि तं पश्यामि यो ह्यपरिचितयानया न निर्भरमुपगूढो यो वा न विप्रलब्धः । नियतमियमालेख्यगतापि चलति, पुस्तकमय्यपीन्द्रजालमाचरत्युत्कीर्णापि विप्रलभते, श्रुताप्यभिसंधत्ते, चिन्तितापि वञ्चयति ।

एवंविधयापि चानया दुराचारया कथमपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः । सर्वाविनयाधिष्ठानतां च गच्छन्ति । तथा हि अभिषेकसमय एवैषां मङ्गलकलशजलैरिव प्रक्षाल्यते दाक्षिण्यम् । अग्निकार्यधूमेनेव मलिनीभवति हृदयम् । पुरोहितकुशाग्रसंमार्जनीभिरिवापनीयते क्षान्तिः । उष्णीषपट्टबन्धेनेवाच्छाद्यते जरागमनस्मरणम् । आतपत्रमण्डलेनेवापवार्यते परलोकदर्शनम् ।

---

मानादभिज्वलनात्मको वा । तस्यावेगा विस्फूर्जितानि त एव ग्राहा मकरादयः । भ्रविकारा भ्रूभङ्गास्तेषां नाट्यं नर्तनम् । सत्पुरुषव्याहाराणां शिष्टोपदेशानाम् । **अकालेति** प्रावृषि हंसा नश्यन्ति इति प्रसिद्धिः । लक्ष्मीः सर्वगुणानां विनाशहेतुरिति भावः । विस्फोटाः पिटकाः । धर्मो धर्माचरणम् । अपरिचितयाऽसंस्तुतया । यो निर्भरं गाढं नोपगूढः । 'वा' चार्थे । न च विप्रलब्धः प्रतारितः । श्रियं लब्ध्वा यावन्नर आत्मानं सुस्थं मन्यते तावदेव लक्ष्मीस्तं मुञ्चति । एवं वञ्चितः स दुःखसागरे निमज्जतीति भावः । सर्वप्रकारेण वञ्चनप्रकारमेवाह नियतमित्यादिना । दैववशेन दुर्दैवात् । विक्लवाः सर्वतो हता इत्यर्थः । ०अधिष्ठानतामाधिकरणताम् । तदेवोपपादयति तथाहीति । दक्षिणस्य भावो दाक्षिण्यम् । 'दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु' । इति शाश्वतः । अग्निकार्यमभिषेकानन्तरं क्रियमाणं होमादि । पुरोहितः पुरोधाः तस्य दर्भाग्राण्येव संमार्जन्यः शोधन्यः । उष्णीषं शिरोवेष्टनम् । साधुवादा हितवचनानि । परामृश्यते अपमृज्यते । **श्रमेति**-श्रमवशादायासहेतुना शिथिलं श्लथं यत्पारावतमयूरादिशकुनीनां गलपुटं तद्वच्चलाभिश्चञ्चलाभिः । खद्योतो ज्योतिरिङ्गणस्तस्योन्मेषवन्मुहूर्तं क्षणं मनोहराभिः । एतादृशीभिः सम्पद्भिः प्रलोभ्यमानाः । धनस्य लवो लेशस्तस्य लाभेनावलेपो दर्पस्तेन विस्मृतं जन्म जन्मसमयमस्थितिरित्यर्थः । यैः । स्वकुलविरुद्धाचरणं कुर्वन्त इति यावत् । पुनश्च राग आसक्तिलक्षणस्तस्य वेशस्तस्मिन्नभिनिवेशस्तेन । रागावेशं विशेषयति— **अनेकेति**—अनेके ये दोषा विध्यातिक्रमलक्षणा वा गुरुतल्पगमनाभक्ष्यभक्षणादयो वा

चामरपवनैरिवापह्रियते सत्यवादिता । वेत्रदण्डैरिवोत्सार्यन्ते गुणाः । जयशब्दकलकलैरिव तिरस्क्रियन्ते साधुवादाः । ध्वजपटपल्लवैरिव परामृश्यते यशः । तथाहि केचिच्छ्रमवशशिथिलशकुनिगलपुटचपलाभिः खद्योतोन्मेषमुहूर्तमनोहराभिर्मनस्विजनगर्हिताभिः संपद्भिः प्रलोभ्यमाना धनलवलाभावलेपविस्मृतजन्मानोऽनेकदोषोपचितेन दुष्टासृजेव रागावेशेन बाध्यमाना विविधविषयग्रासलालसैः पञ्चभिरप्यनेकसहस्रसंख्यैरिवेन्द्रियैरायास्यमानाः प्रकृतिचञ्चलतया लब्धपरिसरेणैकेनापि शतसहस्रतामिवोपगतेन मनसाकुलीक्रियमाणा विह्वलतामुपयान्ति । ग्रहैरिव गृह्यन्ते । भूतैरिवाभिभूयन्ते । मन्त्रैरिवावेश्यन्ते । सत्त्वैरिवावष्टभ्यन्ते । वायुनेव विडम्ब्यन्ते । पिशाचैरिव ग्रस्यन्ते । मदनशरैर्मर्माभिहता इव मुखभङ्गसहस्राणि कुर्वते । धनोष्मणा पच्यमाना इव विचेष्टन्ते । गाढप्रहाराहता

---

तैरुपचितेन व्याप्तेन यद्वा गौतमोक्ता दोषाः । तथा हि सूत्रम् 'तत्र त्रैराश्यं रागद्वेषमोहार्थान्तरभावात्' । तेषां दोषाणां त्रयो राशयस्त्रयः पक्षाः । रागपक्षः—कामो मत्सरः स्पृहा तृष्णा क्रोध इति' । अनेकैर्दोषैर्वातकफपित्तविकारैरुपचितेन दुष्टासृजा दूषितरक्तेनेव । **पञ्चभिरपि**—ज्ञानेन्द्रियैः तानि च—'श्रोत्रं वाक्चक्षुषी जिह्वा नासिका चैव पञ्चमी । इति । **मन्त्रैरिति**—मन्त्रैर्देवताधिष्ठातृकैरावेश्यन्ते भूतादिप्रवेशवन्तः क्रियन्ते । सत्त्वैर्दुष्टप्राणिभिरिवावष्टभ्यन्ते हठाद्गृह्यन्ते । विडम्ब्यन्त इतस्ततो विक्षिप्यन्ते । मुखभङ्गा आननविकृतयः कुलीराः कर्कटाः । तिर्यक्परिभ्रमन्ति उन्मार्गेण गच्छन्तीत्यर्थः । अधर्मः शिष्टाचारादित्यागः । मृषावादविपाकोऽसत्यभाषणपरिणामः । **कुसुमेति**—कुसुमं नेत्ररोगस्तस्येव रजोविकारै रजोविकृतक्षणैरित्यर्थः । पक्षे कुसुमरजः पुष्पपरागः । 'कुसुमं स्त्रीरजो नेत्ररोगयोः फलपुष्पयोः ।' इति मेदिनी । उत्कुपितलोचना दूषितनेत्राः । कालदष्टाः कालसर्पदष्टा । अकाले सन्ध्यादिरूपे दष्टा वा । अस्मिन्पक्षे सर्पेणेति शेषः । जातुषाभरणानि लाक्षाभूषणानि । सोष्माणं तेजस्विनम् । जत्वपि तेजःसान्निध्याद्द्रवीभवति । महान् मानोऽहंकारः तेन यः स्तम्भो जडिमा तेन । पक्षे महन्मानं प्रमाणमस्य तादृशः स्तम्भ आलानस्तम्भः तेन । पानेन मधुपानेन तज्जन्यमदेनेति यावत् । वर्धितं तैक्ष्ण्यं क्रौर्यं येषाम् । पक्षे पानं निशाने घर्षणं तेन वर्धितं तैक्ष्ण्यं तिग्मता येषाम् । परप्रेरिता धूर्तैः प्रोत्साहिताः । पक्षे शत्रुमुक्ताः । दण्डविक्षेपैः लगुडक्षेपणैः । पक्षे सैन्यप्रेषणैः दण्ड उपायभेदो वा तत्प्रयोगैः । द्रव्यापहारादि कृत्वेत्यर्थः । **अकालेति**—

इवाङ्गानि न धारयन्ति । कुलीरा इव तिर्यक्परिभ्रमन्ति । अधर्मभग्नगतयः पङ्गव इव परेण संचार्यन्ते । मृषावादविपाकसंजातमुखरोगा इवातिकृच्छ्रेण जल्पन्ति । सप्तच्छदतरव इव कुसुमरजोविकारैरासन्नवर्तिनां शिरःशूलमुत्पादयन्ति । आसन्नमृत्यव इव बन्धुजनमपि नाभिजानन्ति । उत्कुपितलोचना इव तेजस्विनो नेक्षन्ते । कालदष्टा इव महामन्त्रैरपि न प्रतिबुध्यन्ते । जातुषाभरणानीव सोष्माणं न सहन्ते । दुष्टवारणा इव महामानस्तम्भनिश्चलीकृता न गृह्णन्त्युपदेशम् । तृष्णाविषमूर्च्छिताः कनकमयमिव

---

अनार्तवपुष्पोद्गमो हि दुश्चिह्नम् तदुक्तम्—''द्रुमौषधिविशेषाणामकाले कुसुमोद्गमः । फलप्रसवयोर्बन्ध महोत्पातं विदुर्बुधाः'' ॥ इति भानु० । उक्तं च हितोपदेशे—'अकालकुसुमानीव भयं संजनयन्ति हि ।' इति । अतिरौद्रा अन्येषां भयावहा भूतिः सम्पद्येषां ते । पक्षे भूतिर्भस्म । तैमिरिकाः तिमिररोगेणोपहतचक्षुषः । **अदूरेति**—भाविनमनर्थं न पश्यन्तीति भावः । परलोकभयं वा न गणयन्ति । पक्षे दूरस्थितं वस्तु द्रष्टुमक्षमाः । मृतपटहाः नृपादीनां मरणे पटहा वाद्यन्ते । कस्मिंश्चिद्देशेमृतकानां पुरस्तादपि वाद्यवादनं देशाचारः । ते यथा श्रूयमाणा निर्वेदमुत्पादयन्ति तथा अमी अपि । **महापातकेति**—महापातकानि ब्रह्महत्यादीनि तदध्यवसायास्तान्निश्चयाः । आध्मातमूर्तयः स्फीतदेहाः । व्यसनानां मृगयामद्यपानस्त्रीसेवनदुरोदरादीनां शतं तस्य शरव्यतां लक्ष्यताम् । व्यसनवशं याता इत्यर्थः । वल्मीकः वामलूरस्तस्य तृणं तदग्रावस्थिताः । ते यथा पतितास्तत्रैव झटिति विलीयन्ते तथा । पतितं स्वधर्मच्युतम् । अत्र याज्ञवल्क्यः—'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति' ॥ इति । तदुक्तं मनुना— ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह इति' ॥ राजान इति शेषः । **अपरेष्विति**—अपरे तु उक्तप्रकारेण दोषानपि गुणपक्षमध्यारोपयद्भिर्धूर्तैः स्तुतिभिः प्रतार्यमाणाः सर्वजनस्योपहास्यतां यान्ति इत्यन्वयः । कीदृशैर्धूर्तैः । स्वार्थसाधनतत्परैः । धनमेव पिशितमामिषं तस्य ग्रासे गृध्रैः । अतिगृध्नुभिरित्यर्थः । **आस्थानेति**—आस्थानं राजसभा तदेव नलिनी कमलिनी तस्यां बकैरिव स्थितैः । बका यथा नलिनीमाश्रित्य तत्पत्रादिभिरावृतशरीरा मत्स्यान्वञ्चयित्वाकस्मादेव भक्षयन्ति तद्वद्धूर्ता अपि नृपाश्रयबलात्परान् वञ्चयित्वा

सर्वं पश्यन्ति। इषव इव पानवर्धिततैक्ष्ण्याः परप्रेरिता विनाशयन्ति। दूरस्थितान्यपि फलानीव दण्डविक्षेपैर्महाकुलानि शातयन्ति। अकालकुसुमप्रसवा इव मनोहराकृतयोऽपि लोकविनाशहेतवः। श्मशानाग्नय इवातिरौद्रभूतयः। तैमिरिका इवादूरदर्शिनः। श्रूयमाणा अपि प्रेतपटहा इवोद्वेजयन्ति। चिन्त्यमाना अपि महापातकाध्यवसाया इवोपद्रवमुपजनयन्ति। अनुदिवसमापूर्यमाणाः पापेनेवाध्मातमूर्तयो भवन्ति। तदवस्थाश्च व्यसनशतशरव्यतामुपगता वल्मीकतृणाग्रावस्थिता जलबिन्दव इव पतितमप्यात्मानं नावगच्छन्ति।

अपरे तु स्वार्थनिष्पादनपरैर्धनपिशितग्रासगृध्रैरास्थाननलिनीबकैर्द्यूतं विनोद इति, मृगया श्रम इति, पानं विलास इति, प्रमत्तता शौर्यमिति, स्वदारपरित्यागोऽव्यसनितेति, गुरुवचनावधी-

---

तत्स्वं भक्षयन्तीति भावः। प्रतारणाप्रकारमेवाह—द्यूतं विनोदः क्रीडामात्रम्। एवं शाकुन्तलेपि—'मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः।' इति। न च तद्विधाने कापि हानिः पातकं वास्ति। इत्यादिकथनप्रकारेण। एवमुत्तरत्रापि पानं मद्यपानम्। एतानि चत्वारि कामजानि व्यसनानि। तदुक्तं मनुना-'पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम्। एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे॥' इति। प्रमत्तताऽनवधानता। अव्यसनितानासक्तिता गुर्विति—'मूढः परप्रत्ययनेयबुद्धिः' इति वचनादमूढेन राज्ञा स्वयमेव सर्वव्यवहारः कार्यः। न कस्यचिदनुरोधाद्वर्तितव्यं गुरुवचनमप्यनादरणीयम्। अतो भवत्कृतो गुरुवचनतिरस्कारो भवतोऽपरप्रणेयत्वमेव स्थापयेदित्यादि कथयन्तीति भावः। 'गुरुवचनावधीरणेन क्रूरोऽयं प्रभुरिति भियाऽपरे सामन्तादयो वश्यत्वं प्रतिपद्यन्ते इति तेषामाशयः।' इति भानु०। अजितेति—"शिक्षार्थं ताडिता भृत्या यस्य राज्ञः सम्यक्सेवां कुर्वन्ति स जितभृत्योऽजितभृत्यस्तस्य भावस्तत्ता ताम्। इदं च नृपतेर्दूषणम्। वैगुण्ये भृत्यानामवश्यं शिक्षा प्रदातव्येति राजचिह्नम्। तदुक्तम्—'शठदमनमशठपालनमाश्रितभरणं च राजचिह्नानि' इति। तस्मिन्सुखोपसेव्यत्वं सुखेनोपसेवितुं योग्यः सुखोपसेव्यस्तस्य भावस्तत्त्वम्। सुखोपसेव्योऽयं नृप इति लोके ख्यातिमात्रं गुणम् आरोप्यते।" इति भानु०। महापराधानां मनुष्यवधादीनामवकर्णनमाकर्णनं

रणमपरप्रणेयत्वमित्यजितभृत्यता सुखोपसेव्यत्वमिति, महापराधावकर्णनं महानुभावतेति, परिभवसहत्वं क्षमेति, स्वच्छन्दता प्रभुत्वमिति, देवावमाननं महासत्त्वतेति, बन्दिजनख्यातिर्यश इति, तरलतोत्साह इत्यविशेषज्ञतापक्षपातित्वमिति, दोषानपि गुणपक्षमध्यारोपयद्भिरन्तःस्वयमपि विहसद्भिः, प्रतारणकुशलैर्धूर्तैरमानुषोचिताभिः स्तुतिभिः प्रतार्यमाणा, वित्तमदमत्तचित्ता, निश्चेतनतया तथैवेत्यात्मन्यारोपितालीकाभिमाना, मर्त्यधर्माणोऽपि दिव्यांशावतीर्णमिव, सदैवतमिवातिमानुषमात्मानमुत्प्रेक्षमाणाः प्रारब्धदिव्योचितचेष्टानुभावाः, सर्वजनस्योपहास्यतामुपयान्ति, आत्मविडम्बनां चानुजीविना जनेन क्रियमाणामभिनन्दन्ति। मनसा देवताध्यारोपणप्रतारणादसद्भूतसंभावनोपहताश्चान्तःप्रविष्टापरभुजद्वयमिवात्मबाहुयुगलं संभावयन्ति। त्वगन्तरिततृतीयलोचनं स्वललाटमाशङ्कन्ते। दर्शनप्रदानमप्यनुग्रहं गणयन्ति।

---

न तु तेन पर्याकुलीभावश्चित्तस्य तत्प्रतीकारचिन्तनं वा। महानुभावता महापराक्रमः। अन्यकृतः परिभवोऽवमानना तस्य सहत्वं क्षमा तितिक्षा। स्वच्छन्दता स्वैरवर्तनमेव स्वप्रभुत्वप्रकटनम्। देवानां विष्ण्वादिदेवतानामवमाननमवगणनं महासत्त्वता महदैश्वर्यप्रकाशनम्। बन्दिजना मागधास्तैः ख्यातिः स्तुतिः न तु पण्डितजनकृता स्तुतिः। अविशेषज्ञता भृत्येषूत्तमाधममध्यमाविवेकाभावः। तदुक्तम्-

निर्विशेषं यदा राजा समं सर्वेषु वर्तते। तदोद्यमसमर्थानामुत्साहः परिहीयते॥

इति। अपक्षपातित्वं समवृत्तित्वम्। गुणेति—गुणत्वेन प्रतिपादयन्ति। पुनश्च धूर्तानेव विशिनष्टि **अन्तरिति**। अमानुषोचिताभिर्दिव्योचिताभिः। वित्तमदेन मत्तमुन्मादितं चित्तं येषां तेऽत एव निश्चेतनतयाऽपगतविवेकतया इ०। अतिमानुषमतिक्रान्तमनुष्यधर्मम्। उत्प्रेक्षमाणा मन्यमानाः। प्रारब्धदिव्योचिता देवतोचिता याश्चेष्टास्तास्ताः क्रियास्ताभिरनुभावो माहात्म्यं येषाम्। आत्मविडम्बनामसद्गुणारोपलक्षणम्। देवतात्वेन संभावनाप्रकारमेवाह। **मनसेति**। असद्भूता मिथ्याऽनुपपन्ना वा या संभावना हरिहराद्यवतारत्वेन कल्पना तयोपहताः। **अन्तरिति**—हरेश्चतुर्भुजत्वात्। **त्वगिति**—हरस्य त्र्यम्बकत्वात्। संविभागः पात्रवशाद्द्रव्यादिवितरणं पारितोषिकं वा। इति।

दृष्टिपातमप्युपकारपक्षे स्थापयन्ति । संभाषणमपि संविभागमध्ये कुर्वन्ति । आज्ञामपि वरप्रदानं मन्यन्ते । स्पर्शमपि पावनमाकलयन्ति । मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः । न पूजयन्ति द्विजातीन् । न मानयन्ति मान्यान् । नार्चयन्त्यर्चनीयान् नाभिवादयन्त्यभिवादनार्हान् । नाभ्युत्तिष्ठन्ति गुरून् । अनर्थकायासान्तरितविषयोपभोगसुखमित्युपहसन्ति विद्वज्जनम् । जरावैक्लव्यप्रलपितमिति पश्यन्ति वृद्धजनोपदेशम् । आत्मप्रज्ञापरिभव इत्यसूयन्ति सचिवोपदेशाय । कुप्यन्ति हितवादिने । सर्वथा तमभिनन्दन्ति, तमालपन्ति, तं पार्श्वे कुर्वन्ति, तं संवर्धयन्ति, तेन सह सुखमवतिष्ठन्ते, तस्मै ददति, तं मित्रतामुपनयन्ति, तस्य वचनं शृण्वन्ति, तत्र वर्षन्ति, तं बहु मन्यन्ते, तमाप्ततामापादयन्ति, योऽहर्निशमनवरतमुपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्तव्यः स्तौति यो वा माहात्म्यमुद्भावयति । किं वा तेषां सांप्रतं येषामतिनृशंसप्रायोपदेशनिर्घृणं कौटिल्यशास्त्रं प्रमाणमभिचारक्रियाक्रूरैकप्रकृतयः पुरोधसो गुरवः, पराभिसंधानपरा मन्त्रिण उपदेष्टारो, नरपति-

---

अनर्थकोऽर्थशून्यो यः आयासः श्रौतस्मार्तादिकर्मानुष्ठानप्रयासस्तेनान्तरितं विषयोपभोगसुखं यस्य । जरया यद्वैक्लव्यं विकलता तस्मात्प्रलपितं जल्पनम् । आत्मेति-आत्मबुद्ध्यवज्ञानमिति कृत्वा सचिवोपदेशेऽनादरं कुर्वन्ति । तत्र वर्षन्ति धनमिति शेषः । आप्ततां शिष्टतामापादयन्ति प्रापयन्ति । उद्भावयति प्रथयति । किंवेति-सांप्रतं युक्तम् । 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः । ते युक्तायुक्तविचारं नैव कुर्वन्तीति भावः । येषां न मन्वादिप्रणीतं धर्मशास्त्रं प्रमाणं किंतु अतिनृशंसप्रायोऽतिक्रौर्यप्रचुरो य उपदेशस्तेन निर्घृणं वीतदयम् । कौटिल्यशास्त्र-कौटिल्यश्चाणक्यः 'कौटिल्य कुटिलमतिः स एव येन क्रोधाग्नौ प्रसभमदाहि नन्दवंशः' इति मुद्राराक्षसे वर्णितः । तत्प्रणीतं शास्त्रं 'अर्थशास्त्रम्' इति प्रसिद्धम् । येषां गुरव उपदेष्टारो न श्रुतिस्मृतिशास्त्रनिष्णाः शिष्टाः किंतु अभिचारक्रिया परवधोत्पादनार्थं कृत्यादिजननक्रिया । 'हिंसाकर्माभिचारः स्यात्' इत्यमरः । तया क्रूरा एकाद्वितीया प्रकृतिर्येषां तादृशाः पुरोधसः । अभिसंधानं वञ्चना । उक्तं च भारविना-स किंसखा साधु न शास्ति योऽधिपम्' इति । मारणात्मकेषु अभिचारक्रियया परवधोत्पादकेषु तन्त्रेषु । अभियोगः साग्रहप्रयत्नः । 'अभियोगस्त्वभिग्रहः'

सहस्रभुक्तोज्झितायां लक्ष्म्यामासक्तिर्मारणात्मकेषु शास्त्रेष्वभियोगः, सहजप्रेमार्द्रहृदयानुरक्ता भ्रातर उच्छेद्याः।

तदेवंप्राये ऽतिकुटिलकष्टचेष्टासहस्रदारुणे राज्यतन्त्रे ऽस्मिन्महामोहकारिणि च यौवने कुमार, तथा प्रयतेथा यथा नोपहस्यसे जनै, र्न निन्द्यसे साधुभि, र्नाधिक्क्रियसे गुरुभि, र्नोपालभ्यसे सुहृद्भि, र्न शोच्यसे विद्वद्भिः। यथा च न प्रकाश्यसे विटैर्न प्रतार्यसे कुशलैर्नास्वाद्यसे भुजङ्गैर्नावलुप्यसे सेवकवृकैर्न वञ्च्यसे धूर्तैर्न, प्रलोभ्यसे वनिताभि, र्न विडम्ब्यसे लक्ष्म्या, न नर्त्यसे मदेन, नोन्मत्तीक्रियसे मदनेन, नाक्षिप्यसे विषयै, र्न विकृष्यसे रागेण, नापह्रियसे सुखेन। कामं भवान्प्रकृत्यैव धीरः। पित्रा च महता प्रयत्नेन समारोपितसंस्कारः। तरलहृदयमप्रतिबुद्धं च मदयन्ति धनानि। तथापि भवद्गुणसंतोषो मामेवं मुखरीकृतवान्। इदमेव च पुनः पुनरभिधीयसे। विद्वांसमपि सचेतनमपि महासत्त्वमप्यभिजातमपि धीरमपि प्रयत्नवन्तमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति। सर्वथा कल्याणैः पित्रा क्रियमाणमनुभवतु भवान्नवयौवराज्याभिषेकमङ्गलम्। कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम्। अवनमय द्विषतां शिरांसि। उन्नमय बन्धुवर्गम्। अभिषेकानन्तरं च प्रारब्धदिग्विजयः परिभ्रमन्विजितामपि तव पित्रा सप्तद्वीप-

---

इत्यमरः। सहजप्रेम्णार्द्रं स्निग्धं हृदयं येषामत एवानुरक्ताः। तदेवमिति। अतीति–अतिकुटिला अतिकौटिल्यपूर्णाः कष्टा आयासप्रदाश्चेष्टास्तासां सहस्रैर्दारुणे। राज्यतन्त्रे राज्यशासनव्यवहारे। उपा[illegible]भ्यसे निन्दागर्भोक्त्या परिभाष्यसे। प्रकाश्यसे असदाचारतया प्रकटीक्रियसे। विटैः कामुकैः। भुजङ्गैर्जारैः। आस्वाद्यसे द्रव्यापहरणाद्योपभुज्यसे। वनिता[illegible]गाढरागा स्त्री। उक्तं च–'सा कविता सा वनिता यस्याः श्रवणेन दर्शनेनापि। कविहृदयं विटहृदयं सरलं तरलं च सत्वरं भवति'॥ इति। नर्त्यसे तास्ताश्चेष्टाः कार्यसे। आक्षिप्यसे कुपथं नीयसे। अपह्रियसे आत्मसात्क्रियसे। केवलं सुखोपभोगरतेन न त्वया भाव्यमित्यर्थः। काममत्यन्तम। यद्वा काममभ्युपगमे अप्रति-

भूषणां पुनर्विजयस्व वसुन्धराम् । अयं च ते कालः प्रतापमारोपयितुम् । आरूढप्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशो भवति । इत्येतावदभिधायोपशशाम ।

उपशान्तवचसि शुकनासे चन्द्रापीडस्ताभिरुपदेशवाग्भिः प्रक्षालित इवोन्मीलित इव स्वच्छीकृत इव निर्मृष्ट इवाभिषिक्त इवाभिलिप्त इवालङ्कृत इव पवित्रीकृत इवोद्भासित इव प्रीतहृदयो मुहूर्तं स्थित्वा स्वभवनमाजगाम ।

---

वृद्धपप्रगल्भमतिम् । मदयन्ति समदं कुर्वन्ति । न भवादृशामिति शेषः । कल्याणैः मङ्गलैः सह । प्रताप कोषदण्डजं तेजः ' स प्रतापः प्रभावश्च यत्तेजः कोषदण्डजम् । ' इत्यमरः । आरोपयितुं शत्रुनृपाणामुपरि लब्धप्रतिष्ठं कर्तुम् । सिद्धादेशः सिद्धः अप्रतिहत आदेशो भविष्यकथनमाज्ञा च यस्य । आह च विशाखदत्तः — परैरपरिभूताज्ञस्त्वामिव प्रभुरुच्यते' । उन्मीलित उज्ज्वलितः । निर्मृष्टः संस्कृतः । उद्भासित उद्दीपितः ।

# हर्षवर्धनेन स्वसुरन्वेषणम् ।

## हर्षचरिते अष्टम उच्छ्वासः ।

सहसा सम्पादयता मनोरथप्रार्थितानि वस्तूनि ।
दैवेनापि क्रियते भव्यानां पूर्वसेवेव ॥ १ ॥
विद्वज्जनसम्पर्को नष्टेष्टप्राप्तिदर्शनाभ्युदयः ।
कस्य न सुखाय भवने भवति महारत्नलाभश्च ॥ २ ॥

---

**सहसेति** । सहसा हठात्, मनोरथप्रार्थितानि अभिलषितानि, वस्तूनि द्रव्याणि, सम्पादयता प्रददता, दैवेन भाग्येनापि अनुकूलेनेति भावः; किं पुनः पुरुषकारेण अन्ये वा इत्यपि शब्दार्थः; भव्यानां योग्यानां सत्पात्राणामिति भावः; पूर्वसेवा—प्रथमा परिचर्या, क्रियते इव विधीयते इव; सुदैवं हि सहसैव सतां मनोरथं सम्पाद्य सदनुरागस्य प्रथमनिदर्शनं प्रदर्शयति, उत्तरत्रापि प्रभूताभ्युदयं जनयतीति भावः । श्लोकेनानेन भाग्यवतः सतो हर्षस्य दैवानुकूल्येन यात्रायाः साफल्यं सूचितम् ।

अथापरेद्युरुत्थाय पार्थिवस्तस्माद्ग्रामकान्निर्गत्य विवेश विन्ध्याटवीम्। आट च तस्यामितश्चेतश्च सुबहून्दिवसान्। एकदा तु भूपतेर्भ्रमत एवाटविकसामन्तशरभकेतोः सूनुर्व्याघ्रकेतुर्नाम कुतोऽपि अवनाटनासिकम्, चिपिटाधरम्, चिकिनचिबुकम्, जङ्गमामिव गिरितटतमालपादपम्, अञ्जनशिलाच्छेदमिव चलन्तम्, अयःसारमिव गिरेर्विन्ध्यस्य गलन्तम्, कालपाशं कुरङ्गयूथानाम्, धूमकेतुं मृगराजचक्राणाम्, हृदयमिव हिंसायाः, फलमिव पापस्य, कारणमिव कलिकालस्य, शबरयुवानमादायाजगाम। दूरे च स्थापयित्वा विज्ञापयांबभूव—'देव, सर्वस्यास्य विन्ध्यस्य स्वामी, सर्वपल्लीप्राग्रहरः शबरसेनापतिर्भूकम्पो नाम। तस्यायं निर्घातनामा स्वस्रीयः सकलस्यास्य विन्ध्यकान्ताराारण्यस्य पर्णानामप्यभिज्ञः किमुत प्रदेशानाम्। एनं पृच्छतु देवः, योग्योऽयमाज्ञां कर्तुम्।'

---

**विद्वदिति।** विदुषा जनेन पण्डितलोकेन, सम्पर्कः सङ्गः सख्यमितिः भावः, तथा नष्टेति। नष्टस्य अदर्शनं गतस्य, इष्टस्य प्रियस्य, ज्ञातेः बन्धुजनस्य, दर्शनम् साक्षात्कारः, तदेव अभ्युदयः मङ्गलम्, इष्टलाभजजनितानन्द इत्यर्थः, भवने गृहे, महारत्नानां महामूल्यमणीनाम्, अन्विष्यापि दुर्लभानामिति भावः, लाभश्च प्राप्तिश्च कस्य जनस्येति भावः, सुखाय आनन्दाय, न भवति ? न जायते ? अपि तु सर्वस्य एव भवति इत्यर्थः। एतेन हर्षस्य दिवाकारमित्राख्यविद्वन्मित्रलाभः भगिन्याः राज्यश्रियाः प्राप्तिः महामूल्यैकावलीलाभश्च सूचितः।

एतदेव प्रतिपादयति, अथ इत्यादि। अपरेद्युः अपरस्मिन् दिवसे, वनग्रामे आवासग्रहणस्य परदिने इत्यर्थः। आट बभ्राम।

एकदा तु भूपतेः इत्यादौ 'व्याघ्रकेतुः—शबरयुवानमादाय' इति उत्तरेण सम्बन्धः।

भूपतेः हर्षस्य (कर्मणि षष्ठी), आटविकः आरण्यः सामन्तः अधिराजः वनप्रदेशरक्षणाय हर्षात् प्राप्ताधिकारः इत्यर्थः, यः शरभकेतुः तदाख्यः कश्चित् तस्य सूनुः पुत्रः इति व्याघ्रकेतुरित्यस्य विशेषणम्।

शबरयुवानं विशिनष्टि। **अवनाटनासिकं** निम्ननासापुटम्, अवनाटशब्देनैव निम्ननासिके लब्धेऽपि पुनर्नासिकाशब्दग्रहणं नासाया अतिनिम्नत्वद्योतनार्थमिति

इति कथिते च निर्घातस्तु क्षितितलनिहितमौलिः प्रणाममकरोदुपनिन्ये च तित्तिरिणा सह शशोपायनम्। अवनिपतिस्तु संमानयन्स्वयमेव तमप्राक्षीत्—'अङ्ग, अभिज्ञा यूयमस्य सर्वस्योद्देशस्य। विहारशीलाश्च दिवसेष्वेतेषु भवन्तः। सेनापतेर्वान्यस्य वा तदनुजीविनः कस्यचिदुदाररूपा नार्यागता भवेद्दर्शनगोचरम्' इति।

निर्घातस्तु भूपालालापनप्रसादेनात्मानं बहुमन्यमानः प्रणनाम दर्शितादरं च व्यज्ञापयत्—देव, प्रायेणात्र हरिण्योऽपि नापरिगताः संचरन्ति सेनापतेः कुत एव नार्यः। नाप्येवंरूपा काचिदबला। तथापि देवादेशादिदानीमन्वेषणं प्रतिदिनमनन्यकृत्यैः क्रियते यत्नः। इतश्चार्धगव्यूतिमात्र एव मुनिमहिते महति महीधरमालामूलरुहि महीरुहां षण्डे पिण्डपाती प्रभूतान्तेवासिपरिवृतः पाराशरी दिवाकरमित्रनामा गिरिनदीमाश्रित्य प्रतिवसति स यदि विन्देद्वार्ताम्' इति। तच्छ्रुत्वा नरपतिरचिन्तयत्—'श्रूयते

---

मन्तव्यम्, अन्तःप्रविष्टनासिकमित्यर्थः। चिपिटाधरं स्थूललम्बरदनच्छदम्। चिकिनचिबुकं स्थूलेषद्ध्रस्वाधराधोभागम्। अञ्जनशिलाच्छेदमिव कज्जलप्रस्तरशकलमिव। अयःसारमिव लोहस्य स्थिरांशमिव। कुरङ्गयूथानां मृगसङ्घानां, कालपाशं यमस्य बन्धनरज्जुमिव, दर्शनमात्रेणैव हननादिति भावः। धूमकेतुम् अग्निम्, अग्निदर्शनं सिंहानां भयप्रदत्वादिति भावः; यद्वा धूमकेतुमिव उत्पातसूचकग्रहमिव मारकत्वादिति भावः। धूमकेतुप्रादुर्भावः राजचक्राणामपि अशुभं सूचयतीति बोद्धव्यम्। मृगराजचक्राणां, सिंहसमूहानाम्, राजसमूहानामित्यपि व्यज्यते।

**सर्वपल्लीपतीनां** सर्वेषां पल्लीपतीनां क्षुद्रग्रामाधिपतीनां **प्राग्रहरः**-श्रेष्ठः। **स्वस्रीयः**- भागिनेयः, क्षितितलनिहितमौलिः-क्षितितले भूपृष्ठे, निहिता स्थापिता मौलिः संयतः केशः येन सः उपनिन्ये अर्पयामासेत्यर्थः, तित्तिरिणा सह शशोपायनं तित्तिरिशशश्चोपढौकनद्वयमित्यर्थः। अङ्गेति सम्बोधनम्, भोः इत्यर्थः। उद्देशस्य प्रदेशस्य विहारशीला विचरणपराः। तदनुजीविनः सेनापतेः परिजनस्य। उदाररूपा अतिरूपवतीत्यर्थः।

हि तत्रभवतः सुगृहीतनाम्नः स्वर्गतस्य ग्रहवर्मणो बालमित्रं मैत्रायणीयस्त्रयीं विहाय ब्राह्मणायनो विद्वानुत्पन्नसमाधिः सौगते मते युवैव काषायाणि गृहीतवान्' इति । प्रायशश्च जनस्य जनयति सुहृदपि दृष्टो भृशमाश्वासम् । अभिगमनीयाश्च गुणाः सर्वस्य । कस्य न प्रतीक्ष्यो मुनिभावः । भगवती वैधेयेऽपि धर्मगृहिणी गरिमाणमापादयति प्रव्रज्या किं पुनः सकलजनमनोमुषि विदुषि जने । यतो नः कुतूहलि हृदयमभूत्सततमस्य दर्शनं प्रति प्रासङ्गिकमेवेदमापतितमतिकल्याणं पश्यामः प्रयत्नप्रार्थितदर्शनं जनमिति । प्रकाशं चाब्रवीत्—'अङ्ग, समुपदिश तमुद्देशं यत्रास्ते स पिण्ड-

---

अनन्यकृत्यैः-नास्ति अन्यत् अन्वेषणादपरं कृत्यं कार्यं येषां तैः अन्यकार्यं परिहृत्य इत्यर्थः । अर्द्धगव्यूतिमात्रे क्रोशैकपरिमिते, 'गव्यूतिः स्त्री क्रोशयुगम्' इत्यमरः । मुनिमहिते ऋषिपूजिते । षण्डे मण्डले, पिण्डपाती ग्रासमात्राय पतति भिक्षां चरतीति तथोक्तः, ग्रासमात्रोपयोगिभिक्षाकरः इत्यर्थः । अन्तेवासिभिः शिष्यैः पाराशरी भिक्षुः । विन्देत् लभेत जानीयादित्यर्थः ।

मैत्रायणीयः वेदशाखाविशेषाध्येता । त्रयीं-ऋक्सामयजुःसंज्ञकं वेदत्रयमित्यर्थः । ब्राह्मणायनः द्विजवरिष्ठः, समाधिः—एकाग्रता । सौगते—सुगतः बुद्धः तस्य इदं तस्मिन् । काषायाणि—कषायरक्तानि वसनानि । आश्वासम्—आशां, प्रीतिं वा । अभिगमनीयाः अनुसरणीयाः । सर्वस्य—यस्मिन् कस्मिन्नपि मते वर्त्तमानस्य इति भावः । प्रतीक्ष्यः पूज्यः, वैधेये मूर्खे, भगवती सर्वशक्तिमती । गरिमाणं गौरवम्, आपादयति प्रतिष्ठापयति । सकलजनमनोमुषि सर्वलोकमनोहरे, प्रव्रज्या सन्न्यासधर्मं इत्यर्थः, मूर्खोऽपि सन्न्यासमाश्रयति चेत् , सर्वेषां पूज्यो भवति इति सरलार्थः ।

**अथ क्रमेण** गच्छत एवास्यैवंविधास्तरवो दर्शनमवतेरुरिति संबन्धः । **अवकेशी**-निष्फलतरुः, वन्ध्योऽफलोऽवकेशी च इत्यमरः अनवकेशिनः फलवन्तः इत्यर्थः । फलेग्रहयः-अवन्ध्याः, फलवन्तवृक्षाः ('स्यादबन्ध्यः फलेग्रहिः' इत्यमरः)। नलदम् उशीरः सल्लकी वा । हरिकेसरः नागकेसरः । सरलाः देवदारवः । निरातङ्करङ्कवः—निःशङ्करङ्कुमृगाः । निराकुलेति—निराकुलानिःशङ्का नकुलानां भुजङ्गघातिप्राणिविशेषाणां कोलेयः विचरणानि येषु तथाभूताः ।

पाती' इति । एवमुक्त्वा च तेनैवोपदिश्यमानवर्त्मा प्रावर्तत गन्तुम् ।

अथ क्रमेण गच्छत एव तस्यानवकोशिनः कुड्मलितकर्णिकाराः, प्रचुरचम्पकाः स्फीतफलेग्रहयः, नीलदलनलदनारिकलानिकराः, हरिकेसरसरलपरिकराः अञ्जनाचला इव पल्लविताः, तनया इवाटवीजाता विन्ध्यस्य, अंशावतारा इव कृष्णरात्रीणाम्, इन्द्रनीलमयाः प्रासादा इव वनदेवतानाम्, पुरस्ताद्दर्शनपथमवतेरुस्तरवः।

ततो नरपतेरभवन्मनसि अदूरवर्तिना खलु भवितव्यं भदन्तेनेति । अवतीर्य च गिरिसरिति समुपस्पृश्यास्मिन्नेव प्रदेशे

---

कलेति—कलैः मधुररवैः कोकिलानां पिकानां कुलैः समूहैः कवलिताः भक्षिता कलिकोद्गमाः कोरकप्ररोहाः येषां ते ।

कृष्णरात्रीणां—कृष्णपक्षीयनिशानाम् , अंशावतारा इव—अंशेनाविर्भावा इव; अत्युच्चवृक्षगहनैः सूर्यालोकप्रवेशाभावादिति भावः । इन्द्रनीलमयाः—इन्द्रनीलाख्यमणिनिर्मिताः । प्रासादाः—हर्म्याः इव; अभ्रंलिहत्वात् अतिनीलवर्णत्वाच्चेति भावः । अवतेरुः—जग्मुरित्यर्थः ।

**भदन्तेन**—पूज्येन बौद्धभिक्षुणा इति यावत् । समुपस्पृश्य—आचम्य । माधवगुप्तः मालवेन्द्रसूनुः विरलैः कतिपयैः इत्यर्थः । प्रावर्तत—प्राक्रमत ।

अथेत्यादौ तरूणां मध्ये दिवाकरमित्रमद्राक्षीदिति संबन्धः । नानादेशीयैर्वीतरागैरिति चार्हतैरित्यादीनां सर्वेषां विशेषणम् । स्थाणूनाश्रितैरित्यादि तु केषांचित् ।

वीतरागैः—विगतविषयवासनैः । आर्हतैः—अर्हन् देवता उपास्य इति भावः, येषां तथोक्ताः तैः नग्नक्षपणकैः इत्यर्थः । मस्करिभिः—परिव्राजकैः । श्वेतपटैः—श्वेतोर्णाकम्बलवासोभिः क्षपणकविशेषैरितिः यावत् , पाण्डुरिभिक्षुभिः—त्यक्तकाषायैः, काषायवसनं परित्यज्य गृहीतशुभ्रवस्त्रैरित्यर्थः । भागवतैः—भगवद्भक्तैः वैष्णवैरित्यर्थः । वर्णिभिः—ब्रह्मचारिभिः ।

केशलुञ्चकैः—मुण्डितशिरोभिः । कापिलैः—कापिलेयसाङ्ख्यमतवर्तिभिः । जैनैः—जिनमतावलम्बिभिः । लोकायतिकैः—लोकेषु आयतानि विस्तीर्णानि मतानीति शेषः, अनायाससाध्यत्वादिति भावः, तानि सन्ति एषामिति तादृशैः,

स्थापयित्वा वाजिसेनामवलम्ब्य च तपस्विजनदर्शनोचितं विनयं हृदयेन दक्षिणेन च हस्तेन माधवगुप्तमंसे विरलैरेव राजभिरनुगम्यमानश्चरणाभ्यामेव प्रावर्तत गन्तुम्।

अथ तेषां तरूणां मध्ये नानादेशीयैः स्थानस्थानेषु स्थाणूनाश्रितैः शिलातलेषूपविष्टैस्तरुमूलानि निषेवमाणैर्वीतरागैरार्हतैर्मस्करिभिः श्वेतपटैः पाण्डुरिभिक्षुभिर्भागवतैर्वर्णिभिः केशलुञ्चनैः कापिलैर्जैनैर्लौकायतिकैः काणादैरौपनिषदैरैश्वरकारणिकैः पौराणिकैः साप्ततन्तवैः शाब्दैः पाञ्चरात्रिकैरन्यैश्च स्वान्स्वान्सिद्धान्ताञ्शृण्वद्भिरभियुक्तैश्चिन्तयद्भिश्च शिष्यतां प्रतिपन्नैर्दूरादेवावेद्यमानम्, अकृत्रिम इव सिंहासने निषण्णम्, उद्ग्रीवं मयूरं मरकतमणिकरकमिव वारिधाराभिः पूरयन्तम्, इतस्ततः पिपीलकश्रेणीनां श्यामाकतण्डुलकणान्स्वयमेव किरन्तम्, अरुणेन चीवरपट-

---

चार्वाकैरित्यर्थः। ( चार्वाकलोकायतिकौ इति कोषः ) काणादैः—कणादकृतवैशेषिकमतवर्तिभिः। औपनिषदैः—वेदान्तवादिभिः, ऐश्वरकारणिकैर्नैयायिकैः। धर्मशास्त्रिभिः—स्मार्तैः। पौराणिकैः—पुराणज्ञैः। साप्ततन्तवैः—सप्ततन्तुः क्रतुः यज्ञ इत्यर्थः स एव उपास्यः, इष्टफलप्रद इति भावः, तेषां तथोक्तैः कर्मयोगिभिरित्यर्थः। शाब्दैः—शब्दशास्त्राणि व्याकरणादीनि अधीयते विदन्तीति वा तथोक्तैः। पाञ्चरात्रिकः वैष्णवभेदः। पञ्चविधं ज्ञानं यत्र तत् "रात्रञ्चज्ञानवचनं ज्ञानं पञ्च विधं स्मृतम् पञ्चरात्रमिति ख्यातम्" इत्युक्तपञ्चज्ञानसाधनं नारदाद्युक्तग्रन्थभेदः इति यावत् तदस्त्यस्य इति पाञ्चरात्रिकः, सिद्धान्तान्—आगमान्। अभियुक्तैः—अभिनिविष्टैः। शिष्यतां प्रतिपन्नैः—अङ्गीकृतशिष्यभावैरित्यर्थः। अवेद्यमानं—मां शिष्यं कुर्वीति याच्यमानम्। विस्रब्धाः—निशङ्काः।

मुनिः—'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते'॥ इत्युक्तलक्षणः

स्थिरचित्तः—दिवाकरमित्रः। अकृत्रिमे इव—स्वभावनिष्पन्ने इव।

सत्यस्वरूपे इत्यर्थः, आसनोपान्तोपविष्टानेकसिंहशिशुत्वादिति भावः। उद्ग्रीवम्-उन्नमितग्रीवम्। मरकतेति-हरिद्वर्णरत्नविशेषनिर्मितकमण्डलुम्। मयूरग्रीवाया मरकततुल्यवर्णत्वादिति भावः। करकः—जलपात्रम्, पक्षिविशेषो वा। पूरयन्तमिति—मयूरं जलम् पाययन्तमिति निष्कर्षः।

लेन संवीतम्, सर्वशास्त्राक्षरपरमाणुभिरिव निर्मितम्, धर्मस्याप्याराधनीयमिव, प्रसादस्यापि प्रसादनीयमिव, मानस्यापि माननीयमिव, जन्म यमस्य, तत्त्वं तपसः, शरीरं शौचस्य, वेश्म विश्वासस्य, सर्वस्वं सर्वज्ञतायाः, पारं परानुकम्पायाः, निर्वृतिं सुखस्य, मध्यमे वयसि वर्तमानं दिवाकरमित्रमद्राक्षीत्। अतिप्रशान्तगम्भीराकारारोपितबहुमानश्च सादरं दूरादेव शिरसा मनसा वचसा च ववन्दे।

दिवाकरमित्रस्तु मैत्रीमयः प्रकृत्या भ्राजिष्णुना भूपतेरप्राकृतेनाकारविशेषेण तेन चाभिजात्यप्रकाशकेन गरीयसा प्रश्रयेण चाह्लादितश्चक्षुषि च चेतसि च युगपदग्रहीत्। धीरस्वभावोऽपि च संपादितससंभ्रमाभ्युत्थानः स्निग्धमधुरया वाचा सगौरवमारोग्यदानेन राजानमन्वग्रहीत्। अभ्यनन्दच्च स्वागतगिरा गुरुमिवाभ्यागतं बहु मन्यमानः स्वेनासनेनाध्यमत्रेति निमन्त्रयाञ्चकार। पार्श्वस्थितं च शिष्यमब्रवीत्—'आयुष्मन्, उपानय कमण्डलुना पादोदकम्' इति। राजा त्वचिन्तयत्—'अलोहः खलु संयमन-

---

सर्वेति। सर्वेषां कृत्स्नानां शास्त्राणाम् तन्त्राणाम् अक्षराणां वर्णानां, परमाणुभिः अतिसूक्ष्मावयवैरित्यर्थः वैदिकसागतादिशास्त्राणामतिनिगूढार्थेष्वपि सुनिपुणमित्यर्थः।

धर्मस्येति—महाधर्मपरायणमित्यर्थः। प्रसादस्येति—अतिसुप्रसन्नाकारमित्यर्थः। मानस्येति—सर्वेषामपि सम्मानार्हमित्यर्थः। जन्म—उत्पत्तिम्—यमस्य—बाह्येन्द्रियनिग्रहस्य। सुखस्य—आनन्दस्य, निर्वृतिं—सुखं, सुखस्यापि सुखदमिति भावः; सदानन्दमयमिति तात्पर्यम्। प्रकृत्या स्वभावेन, मैत्रीमयः सद्भावपूर्णः। भ्राजिष्णुना—राजमानेन। आभिजात्यप्रकाशकेन महाकुलजन्मसूचकेन प्रश्रयेण—विनयेन। स्निग्धमधुरया—सस्नेहप्रियया। अलोहः—लोहव्यतिरेकेण निर्मित इत्यर्थः। संयमनपाशः बन्धनरज्जुः। स्थाने खलु—युक्त एव। चक्षुःप्रमाणेति-चक्षुरेव नेत्रमेव प्रमाणं हेतुः, ज्ञानकारणमित्यर्थः, यस्य तादृशः, प्रत्यक्षसिद्ध इत्यर्थः, यः प्रसादः अनुग्रहः, दर्शनदानरूप इति यावत् तेन स्वीकृतस्य अधीनीकृतस्य, परकरणमिव अन्यत् साधनमिव प्रसादस्य इति भावः यद्वा परकरणमिव-

पाशः सौजन्यमभिजातानाम्। स्थाने खलु तत्रभवान्गुणानुरागी ग्रहवर्मा बहुशो वर्णितवानस्य गुणान्' इति। प्रकाशं चावभाषे—'भगवन्, दर्शनपुण्यानुगृहीतस्य मम पुनरुक्तः इवायमार्यप्रयुक्तः प्रतिभात्यनुग्रहः। चक्षुःप्रमाणप्रसादस्वीकृतस्य च परकरणमिवासनादिदानोपचारचेष्टितम्। अतिभूमिरेव भवादृशां पुरः संभाषणामृताभिषेकप्रक्षालितसकलवपुषश्च मे प्रदेशवृत्तिः। पाद्यमप्यपार्थकम्। आसतां भवन्तो यथासुखम्। आसीनोऽहम्' इत्यभिधाय क्षिताविवोपाविशत्।

'अलङ्कारो हि परमार्थतः प्रभवतां प्रश्रयातिशयः, रत्नादिकस्तु शिलाभारः' इत्याकलय्य पुनः पुनरभ्यर्थ्यमानोऽपि यदा न प्रत्यपद्यत पार्थिवो वचनं तदा स्वमेवासनं पुनरपि भेजे भदन्तः। भूपतिमुखनलिननिहितनिभृतनयनयुगलनिगडनिश्चलीकृतहृदयश्च स्थित्वा काश्चित्कालकलामवादीत्—'अद्यप्रभृति न केवलमयमनिन्द्यो वन्द्योऽपि प्रकाशितसत्सारः संसारः। किं नाम नालोक्यते जीवद्भिरद्भुतं येन रूपमचिन्तितोपनतमिदं दृक्पथमुपगतम्।

---

आत्मपरिजनात् पृथक्करणमिवेत्यर्थः। अतिभूमिः—भूमिं मर्यादाम् अतिक्रान्ता अतिभूमिः (मर्यादालङ्घनमित्यर्थः)। भूमिमति क्रान्ता स्वर्गावस्थानरूपा वा। प्रदेशवृत्तिः—एकदेशावस्थानम्, अथवा अवस्थानम् आसनग्रहणरूपव्यवहार इत्यर्थः। भवद्दर्शनसम्भाषणाद्भिरेव वयं कृतार्थाः स्मः, अग्रतः आसनग्रहणन्तु न युक्तमेव, मर्यादातिक्रमणापराधादिति भावः।

परमार्थतः—यथार्थतः। आकलय्य—वितर्क्य इत्यर्थः। प्रत्यपद्यत—स्वीचकार।

भूपतिरिति—भूपतेः राज्ञः, मुखनलिने वदनपङ्कजे निहितम् अर्पितं, निभृतं विनीतं विनयव्यञ्जकमित्यर्थः। नयनयुगलमेव—चक्षुर्द्वयमेव, निगडः बन्धनशृङ्खला, तेन निश्चलीकृतं, स्थिरीकृतं हृदयं चेतः यस्य तथाभूतः, राजनि बद्धदृष्टिरित्यर्थः। अनुमीयन्ते—प्रतर्क्यन्ते। जन्मान्तरावस्थितसुकृतानि पूर्वजन्मार्जितपुण्यानि, हृदयोत्सवैः—चित्तस्य प्रकृष्टानन्दैरित्यर्थः; पूर्वजन्मानुष्ठितबहुपुण्यकर्मफलेनैव ईदृशापूर्वजन्मरूपदर्शनजा चित्तप्रीतिः जायते इति मन्ये इति निष्कर्षः।

एवंविधैरनुमीयन्ते जन्मान्तरावस्थितसुकृतानि हृदयोत्सवैः। इहापि जन्मनि दत्तमेवास्माकममुना तपःक्लेशेन फलमसुलभदर्शनं दर्शयता देवानांप्रियम्। आ तृप्तेः पीतममृतमीक्षणाभ्याम्। जातं निरुत्कण्ठं मानसं निर्वृत्तिसुखस्य। महद्भिः पुण्यैर्विना न विश्राम्यन्ति सज्जने त्वादृशि दृशः। सुदिवसः स त्वं यस्मिञ्जातोऽसि। सा सुजाता जननी या सकलजीवलोकजीवितजनकमजनयद्दायुष्मन्तम्। पुण्यवन्ति पुण्यान्यपि तानि येषामसि परिणामः। सुकृततपसस्ते परमाणवो ये तव परिगृहीतसर्वावयवाः। तत्सुभगं सौभाग्यमाश्रितोऽसि येन। भव्यः स पुरुषभावो भवत्यवस्थितो यः। यत्सत्यं मुमुक्षोरपि मे पुण्यभाजमालोक्य पुनः श्रद्धा जाता मनुजजन्मनि। नेच्छाद्भिरप्यस्माभिर्दृष्टः कुसुमायुधः। कृतार्थमद्य चक्षुर्वनदेवतानाम्। अद्य सफलं जन्म पादपानां येषामसि गतो गोचरम्। अमृतमयस्य भवतो वचसां माधुर्यं कार्यमेव। अस्य त्वयि दृशे शैशवे विनयस्योपाध्यायं ध्यायन्नपि न संभावयामि भुवि। सर्वथा शून्य आसीदजाते दीर्घायुषि गुणग्रामः। धन्यः स भूभृद्यस्य वंशे मणिरिव मुक्तामयः संभूतोऽसि।

---

**देवानां प्रियम्**—देवप्रियम्, सुराणां प्रियम्। अस्मिन्नर्थे महाराजेनाशोकेन पुरा स्वानुशासनेषु प्रयुक्तोऽयं शब्दः। 'देवानां प्रिय इति च मूर्खे' इति नवीना वैयाकरणाः।

निर्वृतिसुखमिति—निर्वृत्तौ शान्तौ यत् सुखम् आनन्दः निरुत्कण्ठम्—निरुद्वेगम्। ईदृशसुभगरूपदर्शनसुखमनुभूय चेतः सुखान्तरनिरपेक्षं भवतीति भावः। न विश्राम्यन्ति—न विरमन्ति, दृशः—चक्षूंषि भवादृशस्य सत्पुरुषस्य दर्शनादेव चक्षुषो रूपतृष्णा निवर्तते, तच्च महद्भिः पुण्यैरेव सञ्जायते इत्यर्थः। जीवितजनकम्—प्राणप्रदमित्यर्थः, रक्षणपोषणादिना इति भावः।

**पुण्यवन्तीति**। परिणामः—फलम्, अतिसौभाग्यं हि पुण्यस्य येन त्वादृशः आश्रयो लब्धः इति भावः।

**भव्येति**। भव्यः साधुः, पुरुषभावः पौरुषम्, त्वदाश्रितं पौरुषमेव सर्वैराकाङ्क्षणीयमिति भावः।

एवंविधस्य च पुण्यवतः कथञ्चिदागतस्य केन प्रियं समाचराम इति पारिप्लवं चेतो नः। सकलवनचरसार्थसाधारणस्य कन्दमूलफलस्य गिरिसरिदम्भसो वा के वयम्। अपरोपकरणीकृतस्तु कायकलिरयमस्माकम्। सर्वस्वमवशिष्टमिष्टातिथ्याय। स्वायत्ताश्च विद्यन्ते विद्याबिन्दवः कतिचित्। उपयोगं तु न प्रीतिर्विचारयति। यदि च नोपरुणद्धि कश्चित्कार्यलवमरक्षणीयाक्षरं वा कथनीयं तत्कथयतु भवाञ्छ्रोतुमभिलषति हृदयं सर्वमिदं नः। तेन कृत्यातिभारेण मन्ये भूषितवान्भूमिमेतामभ्रमणयोग्याम्। कियद्वा चिरा शून्याटवीपर्यटनक्लेशः कल्याणराशेः। कस्माच्च संतप्तरूपेव ते तनुरियमसन्तापार्हा विभाव्यते' इति।

राजा तु सादरतरमब्रवीत्—'आर्य, दर्शितसंभ्रमेणानेन मधुरसविसरममृतमिव हृदयधृतिकरमनवरतं वर्षता वचसैव ते सर्वमनुष्ठितम्। धन्योऽस्मि यदेवमभ्यर्हितमनुग्रहणीयमपि मान्यो मन्यते माम्। अस्य च महावनभ्रमणपरिक्लेशस्य कारणमवधारयतु मतिमान्। मम हि विनष्टनिखिलेष्टबन्धोर्जीवितानु-

---

अमृतमयस्येति—कार्येनेव कर्म एव; अमृतमयत्वात् त्वदुच्चरितवचस्यापि अमृतवत् स्वादुत्वं बोद्धव्यम्, "कारणगुणाः कार्यगुणमारभन्ते" इति न्यायादिति भावः यतोऽमृतमयत्वमतो भवद्वचसां माधुर्यं कार्यं प्रयोज्यं कारणसदृशेन कार्येण भवितव्यमित्युक्तेः।

धन्येति। भूभृत्—राजा पर्वतश्च। वंशे कुले, वेणौ च, मुक्तामयः—त्यक्तदोषः, निर्व्याधिः मौक्तिकरूपश्च। पारिप्लवं—चञ्चलं, दोलाधिरूढमित्यर्थः।

के वयम्?—न अधिकारिणो वयमेव, येन भवदर्चा क्रियते इति भावः सर्ववनचरसाधारण्यात् नो वयं नियूढाधिकारिणः इत्याशयः।

अपरेति। न परस्य अन्यस्य, उपकरणीकृतः अधीनीकृतः इत्यर्थः स्वायत्त इति भावः। कायः देहः एव, कलिः कोरकः, क्षुद्रशरीरमित्यर्थः, तुच्छदेह एव अस्माकं स्वायत्तः, अत एव इममेव आतिथ्याय समर्पयामीति भावः। यद्वा अपरेषाम् अन्येषाम्, उपकरणीकृतः अधीनीकृतः परोपकाराय नियोजित इत्यर्थः। काय एव कलिः अन्त्ययुगम् अनेकदुःखहेतुत्वादितिभावः अत एव इममेव तव परिचर्यायै नियोजयामि इत्याशयः अपरोपकरणीकृतत्वात्। उपयोगम्—उपकारिताम्।

बन्धस्य निबन्धनमेकैव यवीयसी स्वसावशेषा । सापि भर्तुर्वियोगाद्वैरिपरिभवभयाद्भ्रमन्ती कथमपि विन्ध्यवनमिमम्, अशुभशबरबलबहुलम्, अगणितगजकुलकलिलम्, अपरिमितमृगपतिशरभभयम्, अतिनिशितशरकुशपरुषम्, अवटशतविषममविशत् । अतस्तामन्वेष्टुं वयमनिशं निशिनिशि च सततमिमामटवीमटामः ।

न चैनामासादयामः । कथयतु च गुरुरपि यदि कदाचित्कुतश्चिद्वनचरतः श्रुतिपथमुपगता तद्वार्ता' इति ।

अथ तच्छ्रुत्वा जातोद्वेग इव भदन्तः पुनरभ्यधात्—'धीमन् न खलु कश्चिदेवंरूपो वृत्तान्तोऽस्मानभ्युपगतवान् । अभाजनं हि वयमीदृशानां प्रियाख्यानोपायनानां भवताम् ।' इत्येवं भाषमाण एव तस्मिन्नकस्मादागत्यापरः शमिनि वयसि वर्तमानः संभ्रान्तरूप इव पुरस्तादुपरचिताञ्जलिजातकरुणः प्रक्षरितचक्षुर्भिक्षुरभाषत—'भगवन्भदन्त, महत्करुणं वर्तते । बालैव बलवद्व्यसनाभिभूता कल्याणरूपा स्त्री शोकावेशविवशा वैश्वानरं विशति ।

---

अरक्षणीयाक्षरम्—न रक्षणीयानि न गोप्यानि अक्षराणि वर्णा यस्य तथाभूतम् । भव्य.—मङ्गलास्पदम् । विभाव्यते—लक्ष्यते ।

दर्शितसभ्रमेण—दर्शितादरेण, मधुरसविसरम् मधुररसप्रवाहम् ।

अभ्यर्हितम् ।—अभिपूजितम् । अनुपचरणीयम्—अनादरणीयम् ।

जीवितानुबन्धस्य—जीवनधारणस्य, जीवनसंयोगस्य वा निबन्धनं हेतुः, ग्रन्थीभूता इत्यर्थः । यवीयसी अतिशयेन अल्पा, कनिष्ठा, स्वसा भगिनी वैरिपरिभवभयात्—वैरिणः शत्रोः, परिभवः तिरस्कारः पीडनामिति यावत्, तस्माद् भयं त्रासः तस्मात् । अगणितगजकुलकलिलम्—अगणितैः असङ्ख्यातैः गजानां हस्तिनां, कुलैः वृन्दैः कलिलम् गहनम्, आकीर्णमित्यर्थः, दुष्प्रवेशमिति यावत् ।

**अवटेति** । अवटानां गर्तानां ( गर्तावटौ भुवि श्वभ्रे इत्यमरः) शतैः समूहैः, विषमं—नतानतत्वाद् दारुणम् । अनिशं सदा । अटामः करवामः ।

शमिनि शान्ते, चरमे इति यावत् । जातकरुणः उत्पन्नकृपः सदयः इत्यर्थः प्रक्षरितचक्षुः—स्रवद्बाष्पः, अप्रोषितप्राणाम्—अगतजीवनाम् । अनुपरतपूर्वम्—पूर्वस्मिन् न विनष्टम्, मृतप्रायमित्यर्थः । गोचरगतम्—दृष्टिविषयीभूतं, करुणापात्रमिति भावः ।

संभावयतु तामप्रोषितप्राणां भगवान्। अभ्युपपद्यतां समुचितैः समाश्वासनैः । अनुपरतपूर्वं कृमिकीटमपि दुःखितं दयाराशेरार्यस्य गोचरगतम्' इति ।

राजा तु जातानुजाशङ्कः सोदर्यस्नेहाच्चान्तर्द्रुत इव दुःखेन दोदूयमानहृदयः कथमपि गद्गदिकागृहीतकण्ठो विकलवाग्बाष्पायमाणदृष्टिः पप्रच्छ—'पाराशरिन्, कियद्दूरे सा योषिदेवंजातीया। जीवेद्वा कालमेतावन्तमिति । पृष्टा वा त्वया कासि, कस्यासि, कुतोऽसि, किमर्थं वनमिदमभ्युपगतासि, विशसि च किंनिमित्तमनलमित्यादितः प्रभृति कात्स्न्र्येन, कथ्यमानमिच्छामि श्रोतुं, कथमार्यस्य गता गोचरमाकारतो वा कीदृशी' इति ।

तथाभिहितस्तु भूभुजा भिक्षुराचचक्षे—'महाभाग, श्रूयताम् । अहं हि प्रत्यूषस्येवाद्य वन्दित्वा भगवन्तमनेनैव नदीरोधसा सैकतसुकुमारेण यदृच्छया विहृतवानातिदूरम् । एकस्मिंश्च वनलतागहने

---

दोदूयमानहृदयः—पुनः पुनः सन्तप्यमानचेताः इत्यर्थः ( दुनोतेः यङि शानचि रूपम् ) । वाष्पायमाणदृष्टिः—वाष्पायमाणा बाष्पमुद्वमन्ती ( वाष्पोष्मभ्यामुद्वमने इति क्यङि शानचि रूपम् ) दृष्टिः नेत्रं यस्य तथाभूतः, अश्रुरुद्धनयन इत्यर्थः । पाराशरिन्—भिक्षो ! एवंजातीयाः—भवद्वर्णितप्रकाराः इत्यर्थः ।

अतितारः—अतिमहान्, तानः—सङ्गीतस्वरविशेषः तास्मिन् वर्त्तन्ते तिष्ठन्ति इति तथोक्तानाम् । वीणातन्त्रीणां वल्लकीगुणानाम् । एकतानम्—समस्वरम् अनवरतं वा, अधृतिकरम् अधैर्यजननम् ।

**दृष्टवानस्मि**—इत्यत्र 'योषितम्' इत्युत्तरेण सम्बन्धः । **मृन्मयीमिव**—मृत्तिकारचितामिव, पञ्चसु भूतेषु केवलं क्षितिमयीमिव, न तु अबादिमयीमिति भावः, एवमुत्तरत्रापि योजयितव्यम् ।

मरुन्मयीमिव – वायुमयीमिव । निश्वाससम्पदा—दीर्घनिःश्वासबाहुल्येनेत्यर्थः, अविरतं दीर्घनिःश्वासं त्यजन्तीमिति यावत् ।

**प्रभातचन्द्रेति**—लोकान्तरम् परलोकं, लोकालोकपर्वतस्य पार्श्वमिति च । **स्थूलं श्वसितिं**—दीर्घं श्वसतीमिति यावत् । कृशां स्थूलामिति आपाततः विरोधः । कार्श्यस्थौल्ययोः सामानाधिकरण्याभावेनाविरोधात् विरोधाभासः, एवमन्यत्रापि ।

गिरिनदीसमीपभाजि अतितारतानवर्तिनीनां वीणातन्त्रीणामिव-झाङ्कारमेकतानं नारीणां रुदितमधृतिकरमतिकरुणमाकर्णितवानस्मि। समुपजातकौतूहलश्च गतोऽस्मि तं प्रदेशम्। दृष्टवानस्मि च मृन्मयीमिव निश्चेतनतया, मरुन्मयीमिव निश्वाससंपदा, पावकमयीमिव संतापसंतानेन, सलिलमयीमिवास्रप्रस्रवणेन, शब्दमयीमिव परिदेवितवाणीबाहुल्येन। प्रभातचन्द्रमूर्त्तिमिव लोकान्तरमभिलषन्तीम्, दग्धां चण्डातपेन वैधव्येन च, धृतमुखीं पाणिना मौनेन च, गृहीतां प्रियसखीजनेन मन्युना च, कृशां काये, स्थूलां श्वसिते, पूरितां दुःखेन, रिक्तां सत्त्वेन, शून्यां हृदयेन, निश्चलां निश्चयेन, चलितां धैर्यात्, अपि च वसतिं व्यसनानाम्, आधानमाधीनाम्, अवस्थानमनवस्थानाम्, आवासमवसादानाम्, आस्पदमापदाम्, कारणं करुणायाः, पारं परायत्ततायाः योषितम्। चिन्तितवानस्मि च चित्रमीदृशीमप्याकृतिमुपतापाः स्पृशन्तीति। सा तु समीपगते मयि तदवस्थापि सबहुमानमानतमौलिः

---

आधानम्—आधारम्। आधीनां—मानसीनां व्यथानाम्। पारम्—अन्तम्, अवसानमित्यर्थः, इतोऽप्यधिकपरायत्तताया अन्यत्र कुत्राप्यदर्शनादिति यावत्। परायत्ततायाः—पराधीनतायाः, एकान्तपरावलम्बिनीमित्यर्थः।

**प्रबलेति**। प्रबलया महत्या, करुणया कृपया प्रेर्यमानः नीयमानः, अतीव कृपाविष्टहृदय इत्यर्थः। आलपितुकामः सम्भाषितुकामः।

आमन्त्रये—सम्भाषे। अतिप्रणयः अतिवात्सल्यम् अतिविस्रब्धता वा, एतादृक् सम्भाषणस्य स्नेहगर्भाभिप्रायाभिव्यञ्जकतया अपरिचितायां तत्र। इति युक्तमिति भावः॥

**उपासिकेति**। मनोरथः अभिलाषः, स्वमनोऽनुकूलं वचनमित्यर्थः, तथा हि, आत्मनः उपासकतया सर्वमेव उपासकं मन्यामहे, यदि हि इयं तथा न स्यात्, तदा तथोक्तिर्विफलैवेत्यभिप्रायः। **चन्द्रमुखीति**—अमुनिमतं मुनिजनानभिमतं, तपस्विजनविरुद्धमित्यर्थः, विलासिकामुकप्रयोज्यसम्बोधनमिदम् इति भावः इत्यर्थः।

प्रणतवती । अहं तु प्रबलकरुणाप्रेर्यमाणस्तामालपितुकामः पुनः कृतवान् मनसि—कथमिव महानुभावामेनामामन्त्रये । 'वत्से' इत्यतिप्रणयः, 'मातः' इति चाटु, 'भगिनि' इत्यात्मसंभावना, 'देवि' इति परिजनालापः, 'राजपुत्रि' इत्यस्फुटम्, 'उपासिके' इति मनोरथः, 'स्वामिनि' इति भृत्यभावाभ्युपगमः, 'भद्रे' इतीतरस्त्रीसमुचितम्, 'आयुष्मति' इत्यवस्थायामप्रियम्, 'कल्याणिनि' इति दशायां विरुद्धम्, 'चन्द्रमुखि' इत्यमुनिमतम्, 'बाले' इत्यगौरवोपेतम्, 'आर्ये' इति जरारोपणम्, 'पुण्यवति' इति फलविपरीतम्, 'भवति' इति सर्वसाधारणम् । अपि च 'कासि' इत्यनभिजातम्, 'किमर्थं रोदिषि' इति दुःखकारणस्मरणकारि, 'मा रोदीः' इति शोकहेतुमनपनीय न शोभते, 'समाश्वसिहि' इति किमाश्रित्य, 'स्वागतम्' इति यातयामम्, 'सुखमास्यते' इति मिथ्या इत्येवं चिन्तयत्येव मयि तस्मात्स्त्रैणादुत्थायान्यतरा योषिद्वार्यरूपेव शोकविक्लवा समुपसृत्य कतिपयपलितशारं शिरो नीत्वा

---

स्वागतमिति । यातयामम् असामयिकं जीर्णप्रायम् इति यावत्, पुरातनमश्लीलं वा इति भावः, यद्वा—यातः व्यतीतः, यामः प्रहररूपः कालो यस्य तथाविधम्, तथा हि—"स्वागतम्" इति प्रश्नस्य प्रथमदर्शनक्षणरूपकालमानकृततया इदानीं प्रहरादप्यधिके व्यतीतकाले तदभिधानस्य नितरामन्याय्यत्वाद् इत्यभिप्रायः ।

स्त्रैणात् स्त्रीसमूहात् । कतिपयेति । कतिपयानि अल्पसङ्ख्यकानि, पलितानि जरसा शुक्लकेशवृन्दानि ('पलितं जरसा शौक्ल्यं केशादौ' इत्यमरः) तैः शारं चित्रं शबलमित्यर्थः, प्रव्रज्या-संन्यासधर्मः ।

प्रतिपन्नेति । प्रतिपन्नानाम् आपन्नानाम् आश्रितानामित्यर्थः, दुःखस्य क्लेशस्य, क्षपणं निवारणमेव, दीक्षा व्रतं, तत्र दक्षाः पटवः । सौगताः-बौद्धाः ।

महीतलमतुलहृदयसन्तापसूचकैरश्रुबिन्दुभिश्चरणयुगलं दहन्ती ममातिकृपणैरक्षरैश्च हृदयमभिहितवती—'भगवन्, सर्वसत्त्वानुकम्पिनी प्रायः प्रव्रज्या। प्रतिपन्नदुःखक्षपणदीक्षादक्षाश्च भवन्ति सौगताः। करुणाकुलगृहं च भगवतः शाक्यमुनेः शासनम्। सकलजनोपकारसज्जा सज्जनता जैनी। परलोकसाधनं च धर्मो मुनीनाम्। प्राणरक्षणाच्च न परं पुण्यजातं जगति गीयते जनेन। अनुकम्पाभूमयः प्रकृत्यैव युवतयः किं पुनर्विरदभिभूताः। साधुजनश्च सिद्धक्षेत्रमार्तवचसाम्। यत इयं नः स्वामिनी मरणेन पितुरभावेन भर्तुः प्रवासेन च भ्रातुः भ्रंशेन च शेषस्य बान्धववर्गस्यातिमृदुहृदयतयानपत्यतया च निरवलम्बना, परिभवेन च नीचारातिकृतेन, प्रकृतिमनस्विनी, अमुना च महाटवीपर्यटनक्लेशेन कदर्थितसौकुमार्या, दग्धदैवदत्तैरेवंविधैर्बहुभिरुपर्युपरि व्यसनैर्विक्लवीकृतहृदया, दारुणं दुःखमपारयन्ती सोढुम् अग्निं प्रविशति। परित्रायताम्। आर्योऽपि तावदसह्यशोकापनयनोपायोपदेशनिपुणां व्यापारयतु वाणीमस्याम्' इति चातिकृपणं व्याहरन्तीमहमुत्थाप्योद्विग्नतरः शनैरभिहितवान्—'आर्ये यथा कथयसि तथा। अस्मद्गिरामगोचरोऽयमस्याः पुण्याशयायाः शोकः। शक्यते चेन्मुहूर्तमात्रमपि त्रातुमुपरिष्टाद्व्यर्थेयमभ्यर्थना भविष्यति। मम हि गुरुरपर इव भगवान्सुगतः समीपगत एव। कथिते मयास्मिन्नुदन्ते नियतमागमिष्यति परमदयालुः। दुःखान्धकारपटल-

---

करुणेति। करुणायाः कृपायाः कुलगृहं जन्ममन्दिरम्, कारुण्यस्य आयुत्पत्तिस्थानमित्यर्थः, तेन हि भगवता सदसद्दर्शनेन सर्वजीवेषु कारुण्यस्यैव प्राधान्येन दर्शितत्वादित्याभिप्रायः, यद्वा, करुणाकुलस्य प्रभूतकृपायाः गृहम् आवासः। शासनम् आदेशः, शास्त्रं वा, सिद्धेति। सिद्धक्षेत्रं सिद्धायतनं निश्चितफललाभस्थानमित्यर्थः, प्रसिद्धाश्रय इति यावत्। परिभवेन—तिरस्कारेण, उत्पीडनेनेत्यर्थः। दग्धदैवतैः—हतविधिविहितैः।

यत इत्यादौ यत इयं नः स्वामिन्याग्निं प्रविशति तदार्योऽपि तावदस्यां वाणीं व्यापारयत्विति सम्बन्धः।

भिदुरैश्च सौगतैः सुभाषितैः स्वकैश्च दर्शितनिदर्शनैर्नानागमगुरुभिर्गिरां कौशलैः कुशलशीलामेनां प्रबोधपदवीमारोपयिष्यति' इति। तच्च श्रुत्वा 'त्वरतामार्यः इत्यभिदधाना सा पुनरपि पादयोः पतितवती। सोऽहमुपगत्य त्वरमाणो व्यतिकरमिममधृतिकरमतिकरुणमत्रभवते गुरवे निवेदितवान्' इति।

अथ भूभृद्भिक्षवं समवधार्य तद्भाषितमश्रुमिश्रितमश्रुतेऽपि स्वसुर्नाम्नि निम्नीकृतमना मन्युना सर्वाकारसंवादिन्या दशयैव दूरीकृतसन्देहो दग्ध इव सोदर्यावस्थाश्रवणेन श्रवणयोः श्रमणाचार्यमुवाच—'आर्य, नियतं सैवेयमनार्यस्यास्य जनस्यातिकठिनहृदयस्यातिनृशंसस्य मन्दभागस्य भगिनी भागधेयैरेतामवस्थां नीता निष्कारणवैरिभिर्वराकी विशीर्यमाणं मे हृदयमेवं निवेदयति' इत्युक्त्वा तमपि श्रमणमभ्यधात्—'आर्य, उत्तिष्ठ। दर्शय क्वासौ। यतः सुप्रभूतप्राणपरित्राणपुण्योपार्जनाय यामः, यदि कथञ्चिज्जीवन्तीं संभावयामः' इति भाषमाण एवोत्तस्थौ।

अथ समग्रशिष्यवर्गानुगतेनाचार्येण तुरगेभ्यश्चावतीर्य समस्तेन सामन्तलोकेन पश्चादाकृष्यमाणाश्वीयेनानुगम्यमानः पुरस्ताच्च तेन शाक्यपुत्रीयेण प्रदिश्यमानवर्त्मा पद्भ्यामेव तं प्रदेशमविरलैः पदैः पिबन्निव प्रावर्तत। क्रमेण च समुपगतः सुश्राव लतावनान्तरितस्य मुमूर्षोर्भहतः स्त्रैणस्य तत्कालोचिताननेकप्रकारानालापान्—'भगवन्धर्म, धाव शीघ्रम्। क्वासि कुलदेवते। देवि धरणि,

---

व्यापारयतु—प्रयुङ्क्ताम्। उपरिष्टात् परतः मुहूर्त्तानन्तरामित्यर्थः।

दुःखेति। दुःखानि मनःपीड़ा एव, अन्धकाराः तिमिराणि, तेषां पटलं समूहः, तस्य भिदुराणि नाशकानि तैः। दर्शितनिदर्शनैः उद्घाटितदृष्टान्तैः। नानेति। नाना विविधैः आगमैः शास्त्रैः हेतुभिः, शास्त्रयुक्तिमाश्रित्य कथनादिति भावः गुरूणि महान्ति, गौरवयुक्तानीत्यर्थः तैः प्रबोधपदवीं प्रकृष्टज्ञानमार्गं शोकशान्तिकरमुपायमित्यर्थः। व्यतिकरं व्यसनं, विपदमित्यर्थः (अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोः इति मेदिनी)।

धारयसि न दुःखितां दुहितरम्। क नु खलु प्रोषिता पुष्पभूतिकुटुम्बिनी लक्ष्मीः। नाथ मुखरवंश्य, अनाथां विविधाधिविधुरां वधूं विधवां विबोधयसि किमिति नेमाम्। भगवन् सुगत, भक्तजने संज्वारिणि सुप्तोऽसि। राजधर्म पुष्पभूतिभवनपक्षपातिन्, उदासीनीभूतोऽसि कथम्। त्वय्यपि विपद्बान्धव विन्ध्य, बन्ध्योऽयमञ्जलिबन्धः। मातर्महाटवि, रटन्तीं न शृणोषीमामापत्पतिताम्। पतङ्ग, प्रसीद पाहि पतिव्रतामशरणाम्। प्रयत्नरक्षित कृतघ्न चारित्रचण्डाल, न रक्षसि राजपुत्रीम्। किमवधूतं लक्षणैः। हा देवि दुहितृस्नेहमयि यशोमति, मुषितासि दग्धदैवदस्युना। देव, दुहितरि दह्यमानायां नापतसि प्रतापशील, शिथिलीभूतमपत्यप्रेम। महाराज राज्यवर्धन, न धावसि, मन्दीभूता भगिनीप्रीतिः? अहो निष्ठुरः प्रेतभावः। व्यपेहि पाप पावक स्त्रीघातनिर्घृण, ज्वलन्न लज्जसे। भ्रातर्वात, दासी तवास्मि। संवादय द्रुतं देवीदाहं देवाय दुःखितजनार्तिहराय हर्षाय। नितान्तनिःशूक शोकश्वपाक, सकामोऽसि। दुःखदायिन्वियोगराक्षस, तुष्टोऽसि। विजने वने कमाक्रन्दामि, कस्मै कथयामि, कमुपयामि शरणम्, कां दिशं प्रतिपद्ये, करोमि किमभागधेया। गान्धारि, गृहीतोऽयं लतापाशः। पिशाचि मोचनिके, मुञ्च शाखाग्रहणकलहम्। कलहंसि, हंसि किमतःपरमुत्तमाङ्गम्। मङ्गलिके, मुक्तगलं किमद्यापि रुद्यते। सुन्दरि, दूरीभवति सखीसार्थः। स्थास्यसि कथमिवाशिवे शवशिबिरे शबरिके।

---

भैक्षवेति। भैक्षवं भिक्षूक्तम्, समवधार्य सावहितं श्रुत्वेत्यर्थः, निम्नीकृतमनाः, प्रवणीकृतचित्तः, प्रह्वीकृतचेता इत्यर्थः, आक्रान्तहृदयः इति यावत्। सर्वाकारेति। सर्वाकारेण सर्वप्रकारेण, संवादिन्या संवदति इयमेवराज्यश्रीरिति व्यनक्तीति तथोक्तया; यद्वा सर्वमेवायवं संवदति अनुकरोति या तया; निखिलशारीरिकसंस्थानकथनाभिज्ञातयेत्यर्थः।

पश्चादिति। पश्चात् पृष्ठतः, आकृष्यमाणम् आक्षिप्यमाणम् आनीयमानमित्यर्थः, अश्वीयम् अश्वसमूहः येन तथोक्तेन।

शाक्यपुत्रीयेण—दिवाकरमित्रशिष्येण, प्रागुक्तभिक्षुणा इति भावः। अति-दवैः दीर्घैः, पदैश्चरणक्रमैः।

सुतनु, तनूनपाति पतिष्यसि त्वमपि। मृणालकोमले मालावति म्लानासि। मातर्मातङ्गिके, अङ्गीकृतस्तवापि मृत्युः। वत्से वत्सिके, वत्स्यसि कथम् अनभिप्रेते प्रेतनगरे। नागरिके, गरिमाणमागतस्यनया स्वामिभक्त्या। विराजिके, विराजितासि राजपुत्री-विपदि जीवितव्ययव्यवसायेन। भृगुपतनाभ्युद्यमभागाभिज्ञे भृङ्गारधारिणि, धन्यासि। केतकि, कुतः पुनरीदृशी स्वप्नेऽपि सुस्वामिनी। मेनके, जन्मनि जन्मनि देवीदास्यमेव ददातु देवो देहं दहन्दहनः। विजये, वीजय कृशानुम्। सानुमति, नमतीन्दीवरिका दिवं गन्तुकामा। कामदासि, देहि दहनप्रदक्षिणावकाशम्। विचरिके, विरचय वह्निम्। विकिर किरातिके, कुसुमप्रकरम्। कुररिके, कुरु कुरुबककोरकाचितां चिताम्। चामरं चामरग्राहिणि, गृहाण पुनरपि कण्ठे। मर्षयितव्यानि नर्मदे, नर्मनिर्मितानि निर्मर्यादहसितानि। भद्रे सुभद्रे, भद्रमस्तु ते परलोकगमनम्। अग्रामीणगुणानुरागिणि ग्रामेयिके, गच्छ सुगतिम्। वसन्तिके, अन्तरं प्रयच्छ आपृच्छते छत्रधारी। देवि, देहि दृष्टिम्, दृष्ट्वा तव जहाति जीवितं विजयसेना। सेयं मुक्तिका मुक्तकण्ठमारटति निकटे नाटकसूत्रधारी। पादयोः पतति ते ताम्बूलवाहिनी बहुमता राजपुत्रि, पत्रलता। कलिङ्गसेने, अयं पश्चिमः परिष्वङ्गः, पीडय निर्भरमुरसा माम्। असवः प्रवसन्ति वसन्तसेने। मञ्जुलिके, मार्जयसि कतिकृत्वः सुदुःसहदुःखसहस्रा-

---

पिबन्निव। ग्रसन्निव, लङ्घयन्निव इत्यर्थः अतिद्रुतगमनेन समीपवर्त्तिप्रदेशस्य सत्वरमेव पश्चात् करणात् अदृश्यमानत्वात् पिबन्निवेत्युत्प्रेक्षा बोद्धव्या। मुमूर्षोर्मरणोन्मुखस्य। स्त्रैणस्य स्त्रीसमूहस्यालापाश्च शुश्रावेत्यन्वयः।

प्रोषिता—प्रवासं गता। पुष्पभूतेः—तदाख्यस्य हर्षपूर्वजस्य, कुटुम्बिनी गृहिणी, लक्ष्म्याः राजभोग्यत्वादिति भावः। संज्वारिणि—सन्तापवति, राजधर्मो बुद्धः।

पुष्पभूतीति। पुष्पभूतिवंश्यानाम् एकान्ततया राजधर्मप्रतिपालनात् राजधर्मस्य तथात्वं बोद्धव्यम्।

स्निग्धं चक्षुरिदम्। रोदिषि कियदाश्लिष्य च माम्। निर्माणमीदृशं प्रायशो यशोधने। धीरयस्यद्यापि किं मां माधविके। केयमवस्था संस्थापनानाम्। गतः कालः कालिन्दि, सखीजनानुनयाञ्जलीनाम्। उन्मात्तिके मत्तपालिके, कृताः पृष्ठतः प्रणयिनीप्रणिपातानुरोधाः। शिथिलय चकोरवति, चरणग्रहणं ग्राहाणं। कमलिनि, किमनेन पुनः पुनर्दैवोपालम्भेन। न प्राप्तं चिरं सखीजनसङ्गमसुखम्। आर्ये महत्तरिके तरङ्गसेने, नमस्कारः। सखि सौदामिनि, दृष्टासि। समुपनय हव्यवाहनार्चनकुसुमानि कुमुदिके। देहि चितारोहणाय रोहिणि, हस्तावलम्बनम्। अम्ब धात्रि, धीरा भव। भवन्त्येवंविधा एव कर्मणां विपाकाः पापकारिणीनाम्। आर्यचरणानामयमञ्जलिः। परः परलोकप्रयानप्रणामोऽयं मातः। मरणसमये कस्माल्लवलिके, हलहलको बलीयाना नन्दमयो हृदयस्य मे। हृष्यन्त्युच्चरोमाञ्चमुञ्चि किमङ्गीकृत्याङ्गानि। वामनिके, वामेन मे स्फुरितमदर्णं। वृथा विरसासि वयस्य वायस, वृक्षे क्षीरिणि क्षणे क्षणे क्षीणपुण्यायाः पुरः। हरिणि, हेषितमिव हयानामुत्तरतः। कस्येदमातपत्रमुच्चमत्र पादपान्तरेण प्रभावति, विभाव्यते। कुरङ्गिके, केन सुगृहीतनाम्नो नाम गृहीतममृतमयमार्यस्य। दिष्ट्या वर्धसे देवस्य हर्षस्यागमनमहोत्सवेन।' इत्येतच्च श्रुत्वा सत्वरमुपससर्प। ददर्श च मुह्यन्तीमग्निप्रवेशायोद्यतां राजा राज्यश्रियम्। आललम्बे च मूर्च्छामीलितलोचनाया ललाटं हस्तेन तस्याः ससंभ्रमम्।

---

मुखरवंश्य !—मुखरकुलप्रसूत, ग्रहवर्मन्। इति यावत्, ग्रहवर्मणः पूर्वराजन्यवर्ग वा। तनूनपाति वह्नौ।

नितान्तेति। नितान्तम् एकान्तं, निःनास्ति शूकः दया यस्य तत्सम्बुद्धौ (शूकोऽस्त्री श्लक्ष्णदयस्रोः इति मेदिनी) अतिनिर्दय इत्यर्थः शोकश्वपाक—मन्युचाण्डाल! सकामोऽसि पूर्णमनोरथोऽसि माम् स्वाधीनीकुरयेति भाव।

गान्धारि मोचनिके इत्यादीनि गृहगतसखीनां सम्बोधनानि।

भृग्विति। भृगोः प्रपातात्, पर्वतशिखरभागादित्यर्थः, (प्रपातस्त्वतटो भृगुः' इत्यमरः), पतनं पातः, [illegible] अभ्युपगमः अभियोगः, आग्रहः इत्यर्थः,

अथ तेन भ्रातुः प्रेयसः हस्तसंस्पर्शेन सहसैव समुन्मिमील राज्यश्रीः। तथा चासंभावितागमनस्याचिन्तितदर्शनस्य सहसा प्राप्तस्य भ्रातुः स्वप्नदृष्टदर्शनस्येव कण्ठे समाश्लिष्य तत्कालाविर्भावनिर्भरेणाभिभूतसर्वात्मना दुःखसंभारेण निर्दयं नदीमुखप्रणालीभ्यामिव मुक्ताभ्यां स्थूलप्रवाहमुत्सृजन्ती बाष्पवारि विलोचनाभ्याम् 'हा तात, हा अम्ब, हा सख्यः' इति व्याहरन्ती, मुहुर्मुहुरुच्चैस्तरां च समुद्भूतभगिनीस्नेहसद्भावभारभावितमन्युना मुक्तकण्ठमतिचिरं विक्रुश्य 'वत्से, स्थिरा भव त्वम्' इति भ्रात्रा करस्थगितमुखी समाश्वास्यमानापि, 'कल्याणिनि, कुरु वचनमग्रजस्य गुरोः' इत्याचार्येण याच्यमानापि, 'देवि, न पश्यसि देवस्यावस्थाम्। अलमतिरुदितेन' इति राजलोकेनाभ्यर्थ्यमानापि, 'स्वामिनि, भ्रातरमवेक्षस्व' इति परिजनेन विज्ञाप्यमानापि, 'दुहितः, विश्रम्य पुनरारटितव्यम्' इति निवार्यमाणापि बान्धववृद्धाभिः, 'प्रियसखि, कियद्रोदिषि तूष्णीमास्स्व दृढं दूयते देवः' इति सखीभिरनुनीयमानापि, चिरसंभावितानेकदुःसहदुःखनिवहनिर्वहणबाष्पोत्पीडपीड्यमानकण्ठभागा, प्रभूतमन्युभारभरितान्तःकरणा करुणकाहलेन स्वरेण कतिचित्कालमतिदीर्घं रुरोद। विगते च मन्युवेगे वह्नेः समीपादाक्षिप्य भ्रात्रा नीता निकटवर्तिनि तरुतले निषसाद।

---

तस्य भागः—भजनं, ग्रहणमिति यावत्स्वीकरणमिति भावः, तदभिज्ञा तद्विषयज्ञानवती।

**अग्रामीणेति**। ग्रामे भवाः इति ग्रामीणाः (ग्रामाद्यखञौ पा० ४-२-९४) न ग्रामीणाः अग्रामीणाः नागरिकाः इति यावत्। ग्रामेयिका—ग्रामवासिनी।

नाटकसूत्रधारी—नटी। कतिकृत्वः—कति वारान् ("सङ्ख्यायाः"—५-४-२७ पा.) इति कृत्वसुच्। सुदुःसहेति—सुदुःसहैः अतिदुःखेनापि सोढुमशक्यैः, दुःखानां सहस्रैः मनःपीडासमूहै यत् अस्रं विगलितं नेत्राम्बु तेन दिग्धं लिप्तम्, बाष्पकलुषितमित्यर्थः। निर्माणं विधानम् अर्थात्संसारस्य।

संस्थापनानाम्—समस्तनानाम्।

शनैराचार्यस्तु तथा हर्ष इति विज्ञाय विवर्धितादरः सुतरां मुहूर्तमिवातिवाह्य निभृतसंज्ञाज्ञापितेन शिष्येणोपनीतं नलिनीदलैः स्वयमादाय नम्रो मुखप्रक्षालनायोदकमुपनिन्ये। नरेन्द्रोऽपि सादरं गृहीत्वा प्रथममनवरतरोदनाताम्रं चिरप्रवृत्ताश्रुजलजालं रक्तपङ्कजमिव स्वसुश्चक्षुरक्षालयत्पश्चादात्मनः। प्रक्षालितमुखशशिनि च महीपाले सर्वतो निःशब्दः संबभूव सकलो लिखित इव लोकः। ततो नरेन्द्रो मन्दमन्दमब्रवीत्स्वसारम्—'वत्से, वन्दस्वात्रभवन्तं भदन्तम्। एष ते भर्तुर्हृदयं द्वितीयमस्माकं च गुरुः' इति। राजवचनात्तु राजदुहितरि पतिपरिचयश्रवणोद्घातेन पुनरानीतनेत्राम्भसि नमन्त्यामाचार्यः प्रयत्नरक्षितागतबाष्पाम्भःसंभारभज्यमानधैर्यार्द्रलोचनः किञ्चित्परावृत्तनयनो दीर्घं निःशश्वास। स्थित्वा च क्षणमेकं प्रदर्शितप्रश्रयो मृदुवादी मधुरया वाचा व्याजहार—कल्याणराशे, अलं रुदित्वातिचिरम्। राजलोको नाद्यापि रोदनान्निवर्तते। क्रियतामवश्यकरणीयः स्नानविधिः। स्नात्वा च गम्यतां तामेव भूयो भुवम्'।

अथ भूपतिरनुवर्तमानो लौकिकमाचारमाचार्यवचनं चोत्थाय स्नात्वा गिरिसरिति सह स्वस्रा तामेव भूमिमयासीत्। तस्यां च सपरिजनां प्रथममाहितावधानः पार्श्ववर्ती परवर्ती शुचा भगिनीमभोजयत्। अनन्तरं च स्वयमाहारस्थितिमकरोत्। भुक्तवांश्च बन्धनात्प्रभृति विस्तरतः स्वसुः कान्यकुब्जाद्गौडसंभ्रमं गुप्तितो

---

ग्रहिणी—आग्रहवती। हलहलकः उत्कण्ठा। विरससि—रौषि, 'विरमसि' इति पाठो विश्राम्यसीत्यर्थः। वृक्षे क्षीरिणि—वटाश्वत्थादौ क्षीरप्रधाने वनस्पतौ।

अथेत्यादौ भ्रातुर्हस्तसंस्पर्शेन राज्यश्रीः सहसैव समुन्मिमीलेति सम्बन्धः।

करुणकाहलेन—करुणेन करुणरसेन काहलः भृशः, अतिशय इत्यर्थः, पूर्णः इति यावत्। करुणरसपूर्णेन करुणरसोद्दीपकेनेत्यर्थः वा।

निभृतेनेति, निभृतया निःशब्दया, संज्ञया इङ्गितेन, ज्ञापितः आदिष्टः इत्यर्थः, तेन। श्रवणोद्घातेन—आकर्णनप्रसङ्गेन, उद्घातः प्रस्तावः।

गुप्तनाम्ना कुलपुत्रेण निष्कासनं निर्गतायाश्च राज्यवर्धनमरणश्रवणं श्रुत्वा चाहाराकरणमनाहारपराहतायाश्च विन्ध्याटवीपर्यटनखेदं जातनिर्वेदायाः पावकप्रवेशोपक्रमणं यावत्सर्वमश्रृणोद्व्यतिकरं परिजनतः।

---

यतोऽयं राजलोकश्चिरं रुदित्वा नाद्यापि रोदनान्निवर्तते तस्स्नानविधिः क्रियतामिति, जातनिर्वेदायाः—उत्पन्नवैराग्यायाः । विविक्तभुवि—विजनप्रदेशे । आसान्बके उपविवेश ।

# श्रीमच्छङ्करगीताभाष्योपक्रमणिका ।

ओ३म्

नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम् ।
अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ॥१॥

---

## आनन्दगिरिकृतं शाङ्करभाष्योपोद्घातविवेचनम्

कर्मनिष्ठाज्ञाननिष्ठेऽउपायोपेयभूतनिष्ठाद्वयमाधिकृत्य प्रवृत्तं गीताशास्त्रं व्याचिख्यासुर्भगवान् भाष्यकारो विघ्नोपप्लवोपशमनादिप्रयोजनप्रसिद्धये प्रामाणिकव्यवहारप्रमाणकमिष्टदेवतातत्त्वानुस्मरणं मङ्गलाचरणं सम्पादयन्नवशेषेणेतिहासपुराणयोर्व्याचिख्यासितगीताशास्त्रेणैकवाक्यतामभिप्रेत्य पौराणिकश्लोकमेकमेवान्तर्यामिविषयमुदाहरति—**नारायण** इति । 'आपो नारा इति प्रोक्ता, आपो वै नरसूनवः अयनं तस्य ताः पूर्वं—तेन नारायणः स्मृतः'—इति स्मृतिसिद्धः स्थूलदृशां नारायणशब्दार्थः । सूक्ष्मदर्शिनः पुनराचक्षते—नरशब्देन चराचरात्मकं शरीरजातमुच्यते । तत्र नित्यसंनिहिताश्चिदाभासा जीवा नारा इति निरुच्यते, तेषामयनमाश्रयो नियामकोऽन्तर्यामी । नारायण इति । यमधिकृत्याऽन्तर्यामिब्राह्मणं श्रीनारायणाख्यमन्त्राम्नायं चाऽधीयते । तदनेन शास्त्रप्रतिपाद्यं विशिष्टं तत्त्वमादिष्टं भवति । ननु परस्यात्मनो

मायासम्बन्धादन्तर्यामित्वं शास्त्रप्रतिपाद्यत्वं च वक्तव्यम् । अन्यथा कूटस्थासङ्गविषयाद्वितीयस्य तदयोगात् । तथा च शुद्धतासिद्धौ कथं यथोक्तपरदेवता शास्त्रादवनुस्मर्यते । शुद्धस्य हि तत्त्वस्य नुस्मरणमभीष्टफलवदभीष्टम् । तत्राह—**परोऽव्यक्तादिति** । अव्यक्तमव्याकृतं मायेत्यनर्थान्तरं, तस्मात्परो व्यतिरिक्तस्तेनाऽसंस्पृष्टोऽयमपरः—'अक्षरात्परतः परः इति श्रुतेः । गृहीतस्तत्त्वतो मायासम्बन्धाऽभावेऽपि कल्पनया तदीयसङ्गतिमङ्गीकृत्याऽन्तर्यामित्वादिकमुन्नेयम् । यस्मादीश्वरस्य व्यतिरेको विवक्षितस्तस्मिन्नव्यक्ते साक्षिसिद्धेऽपि कार्यलिङ्गकमनुमानमुपन्यस्यति—**अण्डमिति** । अपञ्चीकृतपञ्चमहाभूतात्मकं हैरण्यगर्भं तत्त्वमण्डमित्यभिलप्यते । तदव्यक्तात्पूर्वोक्तादुत्पद्यते । प्रसिद्धा हि श्रुतिस्मृतिवादेषु हिरण्यगर्भस्य मूलकारणादुत्पत्तिः । तथा च कार्यलिङ्गादव्यक्ताभिव्यक्तिरित्यर्थः । हिरण्यगर्भे श्रुतिस्मृतिसमधिगतेऽपि कार्यलिङ्गकमनुमानमस्तीति मन्वानो विराडुत्पत्तिमुपदर्शयति—**अण्डस्येति** । उक्तस्याऽण्डस्य हिरण्यगर्भाभिधानीयस्याऽन्तरिमे भूरादयो लोका विराडात्मका वर्त्तन्ते । कार्यं हि कारणस्याऽन्तर्भवति, तेन हिरण्यगर्भान्तर्भूता भूरादयो लोका विराडात्मानस्तेन सृष्टा इति तल्लिङ्गाद्धिरण्यगर्भाऽसिद्धिरित्यर्थः । लोकानेव पञ्चीकृतपञ्चमहाभूतात्मकविराडात्मत्वेन व्युत्पादयति—**सप्तद्वीपेति** । 'सा पृथिव्यभवद्' इति श्रुतौ विराजो जन्म सङ्कीर्त्तितमित्यङ्गीकारादशेषद्वीपोपेता पृथिवीत्यनेन सर्वलोकात्मको विराडेवोच्यते । च शब्देन विराजो हि हिरण्यगर्भे पूर्वोक्ताण्डात्मन्यन्तर्भावस्ततः सम्भवोऽनुकृष्यते । परमात्मा हि स्वाज्ञाद्वारा जगदशेषमुत्पाद्य स्वातन्त्र्येणान्तर्भाव्याऽखण्डैकरससच्चिदानन्दात्मना स्वे महिम्नि तिष्ठतीत्यर्थः । अत्र च नारायणशब्देनाऽभिधेयमुक्तम्—नरा एव नारा जीवास्तत्त्वं-पदवाच्या, स्तेषामयनमधिष्ठानं तत्पदवाच्यं परं ब्रह्म । तथा च कल्पितस्याऽधिष्ठानातिरिक्तस्वरूपाभावाद्वाच्यस्य कल्पितत्त्वेऽपि लक्ष्यस्य ब्रह्ममात्रत्वाद्ब्रह्मात्मैक्यं विषयोऽत्र सूच्यते । तेनार्थाद्विषयविषयिभावः सम्बन्धोऽपि ध्वनितः । परोऽव्यक्तादित्यनेन मायासंस्पर्शाभावोक्त्या सर्वानर्थनिवृत्त्या परमानन्दाविर्भावलक्षणो मोक्षोऽपि विवक्षितस्तेन च तत्कामस्याऽधिकारो द्योतितः । परिशिष्टेन तु-शब्देन वस्तुनो वास्तवमद्वितीयत्वमावेदितं, तेन च वस्तुद्वारा परमविषयत्वं तज्ज्ञाननिष्ठायास्तदुपायभूतकर्मनिष्ठायाश्चवान्तरविषयत्वमित्यर्थादुक्तमित्यवधेयम् ॥१॥

**स भगवान्सृष्ट्वेदं जगत्, तस्य च स्थितिं चिकीर्षुर्मरीच्यादीनग्रे सृष्ट्वा, प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तम्। ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिधर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास। द्विविधो हि वेदोक्तो धर्मः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च। तत्रैको**

---

ननु नैवं साध्यसाधनभूतं निष्ठाद्वयमत्र भगवता प्रतिपाद्यते, ब्राह्मणाभ्यर्थितस्य भगवतो भूमिभारापहारार्थं वसुदेवेन देवक्यामाविर्भूतस्य तादर्थ्येन मध्यमं पृथासुतं प्रथितमहिमानं प्रेरयितुं धर्मयोरिहानूद्यमानत्वात्। अतो नाऽस्य शास्त्रस्य निष्ठाद्वयं परापरविषयभावमनुभवितुमलमिति। तन्न। भगवतो धर्मसंस्थापनस्वाभाव्यप्रौञ्या-द्धर्मद्वयस्थापनार्थमेव प्रादुर्भावाभ्युपगमाद्भूभारपरिहारस्य चार्थिकत्वादर्जुनं निमित्तीकृत्याऽधिकारिणं स्वधर्मप्रवर्तनद्वारा ज्ञाननिष्ठायामवतारयितुं गीताशास्त्रस्य प्रणीतत्त्वादुचितमस्य निष्ठाद्वयविषयत्वमिति परिहरति—**स भगवानित्यादिना धर्मद्वयमर्जुनायोपदिदेश**ेत्यन्तेन भाष्येण।

तत्र नेदं गीताशास्त्रं व्याख्यातुमुचितमाप्तप्रणीतत्वानिर्धारणत्तथाविधशास्त्रान्तरवदित्याशङ्क्य मङ्गलाचरणस्योद्देशं दर्शयन्नाऽऽदौ शास्त्रप्रणेतुराप्तत्वनिर्धारणार्थं सर्वज्ञत्वादिप्रतिज्ञापूर्वकं सर्वजगज्जनयितृत्वमाह—**स भगवानिति**। प्रकृतो नारायणाख्यो देवः सर्वज्ञः सर्वेश्वरः समस्तमपि प्रपञ्चमुत्पाद्य व्यवस्थितः। न च तस्याऽनाप्तत्वम्। ईश्वरानुगृहीतानामाप्तत्वसिद्ध्या तस्य परमाप्तत्वसिद्धेरित्यर्थः। ननु भगवता सृष्टमपि चातुर्वर्ण्यादिविशिष्टं हिरण्यगर्भादिलक्षणं जगन्न व्यवस्थितिमास्थातुं शक्यते व्यवस्थापकाभावात् न च परस्यैवेश्वरस्य व्यवस्थापकत्वं वैषम्यादिप्रसङ्गात्तत्राऽऽह—**तस्य चेति**। सृष्टस्य जगतो मर्यादाविरहितस्य शङ्किते, तदीयं व्यवस्थां कर्तुमिच्छन्व्यवस्थापकमालोच्य क्षत्रस्याऽपि क्षत्रत्वेन प्रसिद्धं धर्मः तथाविधधर्ममधिगम्य सृष्टवानित्यर्थः। सृष्टस्य धर्मस्य साध्यत्वभावतया साधयितारमन्तरेणासम्भवान्तस्यैव तदनुष्ठातृत्वानभ्युपगमात्प्राणिप्रभेदानामधर्मप्रायाणां तदयोगात्कुतस्तदीया सृष्टिरित्याशङ्क्याऽऽह—**मरीच्यादीनिति**। तेषां भगवता सृष्टानां प्रजासृष्टिहेतूनां यागदानादिप्रवृत्तिसाध्यं धर्ममनुष्ठातुमधिकृतानां स्वकीयत्वेन तदुपादानमुपपन्नमित्यर्थः। चैत्यवन्दनादिभ्यो विशेषार्थः धर्मः विशिनष्टि—**वेदोक्तमिति**। ननु नैतावता जगदशेषमपि व्यवस्थापयितुं शक्यते प्रवृत्तिमार्गस्य पूर्वोक्तधर्मं प्रति नियतत्वेऽपि निवृत्तिमार्गस्य तेन व्यवस्थापनायोग्यत्वात्तत्रा-

**जगतः स्थितिकारणं, प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यः स धर्मो ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोऽर्थिभिरनुष्ठीयमानो दीर्घेण कालेनानुष्ठातॄणां कामोद्भवाद्धीयमानविवेकविज्ञानहेतुकेनाऽधर्मेणाऽभिभूयमाने धर्मे प्रवर्धमाने चाऽधर्मे जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य रक्षणार्थं देवक्यां वसुदेवादंशेन कृष्णः किल सम्बभूव। ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मः, तदधीनत्वाद्वर्णाश्रमभेदानाम्।**

---

ऽऽह—**ततोऽन्यांश्चेति**। निवृत्तिरूपस्य धर्मस्य शमदमाद्यात्मनो गमकमाह—**ज्ञानेति**। विवेकवैराग्यातिशये शमाद्यतिशयो गम्यते ततो, विवेकादि तस्य गमकमित्यर्थः। धर्मे बहुविदां विवाददर्शनाज्जगतः स्थैर्ये करणीभूतधर्मान्तरमपि स्रष्टव्यमस्तीत्याशङ्क्याऽऽह—**द्विविधो हीति**। अतिप्रसङ्गाप्रसङ्गव्यावृत्तये प्रकृते धर्मं लक्षयति—**प्राणिनामिति**। प्रवृत्तिलक्षणो धर्मोऽभ्युदयार्थिनां साक्षादभ्युदयहेतुर्निःश्रेयसार्थिनां परम्परया निःश्रेयसहेतुः, निवृत्तिलक्षणस्तु धर्मः साक्षादेव निःश्रेयसहेतुरिति विभागः। ज्ञानस्यैव निःश्रेयसहेतुत्वेऽपि शमादीनां ज्ञानद्वारा मोक्षहेतुत्वं, ज्ञानातिरिक्तव्यवधानाभावाच्च साक्षादित्युक्तम्।
यद्येवं धर्मो लक्ष्यते तर्हि वर्णित्वमाश्रमत्वं चोपेक्ष्य सर्वैरपि पुरुषार्थार्थिभिर्द्वावपि धर्मौ यथायोग्यमनुष्ठेयावित्यनुष्ठातृनियमासिद्धिरित्याशङ्क्याऽऽह—**ब्राह्मणाद्यैरिति**। अर्थित्वाविशेषेऽपि श्रुतिस्मृतिपर्यालोचनयानुष्ठाननियमासिद्धिरित्यर्थः। नित्यनैमित्तिकेषु यावज्जीवनमनुष्ठानं काम्येषु करणांशे रागाधीना प्रवृत्तिरिति कर्तव्यतांशे वैधीति विभागेऽपि कदाचिदेवाऽनुष्ठानमिति विभागमभिप्रेत्याऽऽह—**दीर्घेणेति**। अथ यथोक्तधर्मवशादेव जगतो विवक्षितस्थितिसिद्धेर्भगवतो नारायणस्यादिकर्तुरनेकानर्थकलुषितशरीरपरिग्रहासम्भवादन्यस्यैव कस्यचिदनाप्तस्य वैषम्यनैर्घृण्यवतो निग्रहपरिग्रहद्वारेण गीताशास्त्रप्रणयनमिति कुतोऽस्याप्तप्रणीतत्वम्?-तत्राह—**अनुष्ठातॄणामिति**। अथवा यथोक्तङ्कायां दीर्घेणेत्यारभ्योत्तरम्। महता कालेन कृतत्रेतात्यये द्वापरावसाने साधकानां कामक्रोधादिपूर्वकादविवेकधर्मबाहुल्याद्धर्माभिवृद्धेश्च जगतो मर्यादाभेदे तदीयां मर्यादात्मनिर्मितां पालयितुमिच्छन् प्रकृतो भगवानेतदर्थेन चातुर्वर्ण्यादिसंरक्षणार्थं लीलामयं मायाशक्तिप्रयुक्तं स्वेच्छाविग्रहं जग्राहेत्यर्थः। 'भौमस्य ब्रह्मणो

स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा सम्पन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां मूलप्रकृतिं वशीकृत्याजो ऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन्स्वमायया देहवानिव जात इव लोकानुग्रहं कुर्वंल्लक्ष्यते, स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया वैदिकं हि धर्मद्वयमर्जुनाय शोकमोहमहोदधौ निमग्नायोपदिदेश, गुणाधिकैर्हि गृहीतोऽनुष्ठीयमानश्च धर्मः प्रचयं गमिष्यतीति । तं धर्मं भगवता यथोपदिष्टं वेदव्यासः सर्वज्ञो भगवान्गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध ।

---

गुप्त्यै वसुदेवादजीजनत्' इति स्मृतिमनुसृत्य पदद्वयमनूद्य व्याचष्टे—**भौमस्येति** । **अंशेनेति**—स्वेच्छानिर्मितेन मायामयेन स्वरूपेणेत्यर्थः । **किलेत्यी**स्मन्नर्थे पौराणिकी प्रसिद्धिरनूद्यते । नहि भगवतो व्यतिरिक्तस्येदं जन्मेति युज्यते वहुविधागमविरोधादिति भावः । ननु वैदिकधर्मसंरक्षणार्थं भगवतो जन्म, 'यदा यदा हि धर्मस्ये'त्यादिदर्शनात्; किमिदं ब्राह्मणत्वस्य रक्षार्थमिति ?—तत्राऽऽह—**ब्राह्मणत्वस्य हीति** । अथाऽपि वर्णाश्रमभेदव्यवस्थापनं विना कथं यथोक्तधर्मरक्षणमित्याऽऽशङ्क्याऽऽह—**तदधीनत्वादिति** । ब्राह्मणं हि पुरोधाय क्षत्रादिः प्रतिष्ठां प्रतिपद्यते याजनाध्यापनयोस्तद्धर्मत्वात्तद्द्वारा च वर्णाश्रमभेदव्यवस्थापनात् । अतो ब्राह्मण्ये रक्षिते सर्वमपि सुरक्षितं भवतीत्यर्थः ।

नन्वेवमपि भगवतो नारायणस्य शरीरादिमत्त्वे सत्यस्मदादिभिरविशेषादनीश्वरत्वप्रसक्तिरित्याऽऽशङ्क्य ज्ञानादिकृतं विशेषमाह **स चेति** । ज्ञानं ज्ञप्तिरर्थपरिच्छित्तिः, ऐश्वर्यमीश्वरत्वं स्वातन्त्र्यं, शक्तिस्तदर्थनिर्वर्तनसामर्थ्यं, बलं सहायसम्पत्तिः, वीर्यं पराक्रमवत्त्वं, तेजस्तु प्रागल्भ्यमधृष्यत्वम्—एते च षड्गुणा सर्वविषयाः सर्वदा भगवति वर्त्तन्ते । तथा च तस्य शरीरादिमत्त्वेऽपि नाऽस्मदादिसाम्यमित्यर्थः । अथैवमपि कथमीश्वरस्यानादिनिधनस्य नित्यशुद्धबुद्धमुक्तस्वभावस्य स्वभावविपरीतं जन्मादि सम्भवति, नहि भूतानामीशिता स्वतन्त्रः स्वात्मनोऽनर्थं स्वयमेव सम्पादयितुमर्हति, न चाऽस्य देहादिग्रहे किमपि फलमुपलभ्यते, तत्राऽऽह **त्रिगुणात्मिकामिति** । सिसृक्षितदेहादिगतवैरूप्यसिद्ध्यर्थमिदं विशेषणं तस्याऽव्यापकत्वं वक्तुं **वैष्णवीमि**त्युक्तम् । ईश्वरपारवश्यं तस्या दर्शयति—**स्वामिति** । तस्याश्च प्रतिभासमात्रशरीरत्वमेव नतु वस्तुत्वमित्याह—**मायामिति** । तस्या

तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूतं दुर्विज्ञेयार्थं तदर्थाविष्करणायाऽनेकैर्विवृतपदार्थवाक्यार्थन्यायमप्यत्यन्तविरुद्धानेकार्थत्वेन लौकिकैर्गृह्यमाणमुपलभ्याऽहं विवेकतोऽर्थनिर्धारणार्थं संक्षेपतो विवरणं करिष्यामि ।

---

नानाविधकार्याकारेण परिणामित्वं सूचयति—**मूलप्रकृतिमिति** । ईश्वरस्य प्रकृत्यधीनत्वं वर्णयति—**वशीकृत्येति** । नित्यत्वं कार्याकारविरहित्वं, शुद्धत्वमकारणत्वं, बुद्धत्वमजडत्वं, मुक्तत्वमविद्याकामकर्मपारतन्त्र्यराहित्यम् । न च नित्यत्वादयः संसारावस्थायामसन्तो मोक्षावस्थायां सम्भवन्तीति युक्तमित्याह—**स्वभाव इति** । देहग्रहे प्राधान्यं मायाया दर्शयितुं पुनः स्वमाययेत्युक्तम् । 'स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः, इति श्रुतिमाश्रित्याह—**देहवानिति** । इवकाराभ्यां देहादेरवस्तुत्त्वेन कल्पितत्त्वं द्योत्यते । धर्माधर्मोपदेशद्वारा प्राणिवर्गस्याभ्युदयनिःश्रेयसतत्परत्वापादनं लोकानुग्रहः । यद्यपि कूटस्थः स्वतन्त्रो नित्यवादिलक्षणश्चैवायमीश्वरः स्वतो दृश्यते तथाऽपि यथोक्तमायाशक्त्या देहादि गृहीत्वा प्राणिनामनुग्रहमादधानो न स्वभावविपर्ययं पर्येतीत्यर्थः नन्नु 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायादीश्वरस्याप्तकामतया कृतकृत्यस्य प्रयोजनाभावादनुग्राह्याणां चाद्वैतवादे व्यतिरिक्तानामसत्त्वाम् धर्मद्वयमुपदेष्टमुचितमिति तत्राह—**स्वप्रयोजनेति** । कल्पितभेदभाञ्जि भूतान्युपादाय तदनुग्रहेच्छया चैत्यवन्दनादिविलक्षणं धर्मद्वयमर्जुनं निमित्तीकृत्याप्तकामोऽपि भगवानुपदिष्टवानित्यर्थः । अर्जुनस्योपदेशापेक्षास्तीति दर्शयितुं विशिनष्टि—**शोकेति** । भूतानुग्रहे कर्तव्ये किमित्यर्जुनाम धर्मद्वयं भगवतोपदिश्यते, तत्राह—**गुणाधिकैरिति** । प्रचयं गमिष्यतीति मत्वा धर्मद्वयमर्जुनायोपादिदेशेति सम्बन्धः । अथ तथापि सुगतोपदिष्टधर्मवदयमपि भगवदुपदिष्टो धर्मो न प्रामाणिकोपादेयतामुपगच्छेदित्याशङ्क्य वेदोक्तत्वान्नास्य तत्तुल्यत्वमित्युक्तमित्यभिप्रेत्य शिष्टपरिगृहीतत्वाच्च मैवमित्याह—**तं धर्ममिति** । अधर्मे धर्मबुद्धिर्वेदव्यासस्य जातेत्याऽऽशङ्क्याह **सर्वज्ञ** इति । कृष्णद्वैपायनं विद्धि व्यासं नारायणं प्रभुम्' इति स्मृतेः सज्जनोपकारकभगवदतारत्वाच्च व्यासस्य नान्यथा बुद्धिरित्याह **भगवानिति** ।

तस्यास्य गीताशास्त्रस्य संक्षेपतः प्रयोजनं परं निःश्रेयसं सहेतुकस्य संसारस्यात्यन्तोपरमलक्षणम् तच्च सर्वकर्मसंन्यासपूर्वकादात्मज्ञाननिष्ठारूपाद्धर्माद्भवति । तथेममेव गीतार्थधर्ममुद्दिश्य भगवतैवोक्तम्—'स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदनम्' इत्यनुगीतासु । किं चान्यदपि तत्रैवोक्तम्—नैव धर्मी न चाऽधर्मी न चैव हि शुभाशुभी, यः स्यादेकासने लीनस्तूष्णीं किञ्चिदचिन्तयन्' इति, 'ज्ञानं संन्यासलक्षणम्' इति च । इहाऽपि चान्त उक्तमर्जुनाय—'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज' इति ।

---

गीताशास्त्रस्याऽनाप्तप्रणीतत्वमपाकृत्य व्याख्येयत्वमुपपादितमुपसंहरति—**तदिदमिति** । पौरुषेयस्य वचसो मूलप्रमाणाभावेनाप्रामाण्यमिति मत्वा विशिनिष्टि **समस्तेति** । शास्त्राक्षरैरेव तदर्थप्रतिपत्तिसम्भवेऽपि किमिति व्याख्यानमित्याशङ्क्याऽऽह—**दुर्विज्ञेयार्थमिति** । 'पदच्छेदः पदार्थोक्तिविग्रहो वाक्ययोजना, आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम्'—इत्यादिक्रमेणाऽस्य शास्त्रस्य पूर्वाचार्यैर्व्याख्यातत्वात्किमर्थमिदमारभ्यते गतार्थत्वात्, तत्राऽऽह—**तदर्थेति** । गीताशास्त्रार्थस्य प्रकटीकरणार्थं पदविभागस्तदर्थोक्तिः समासद्वारा वाक्यार्थनिर्देशस्तत्राऽपेक्षितो न्यायश्चाक्षेपसमाधानलक्षणो वृत्तिकारैर्दर्शितस्तथापि तथाविधमेव शास्त्रं शास्त्रपरिचयशून्यैः समुच्चयवादिभिर्विरुद्धार्थत्वेनानेकार्थत्वेन च गृहीतमालक्ष्य तद्बुद्धिमनुरोद्धुमिदमारब्धव्यमित्यर्थः । येषां प्राचीने व्याख्याने बुद्धिरप्रविष्टा तेषां सम्प्रतितन एतस्मिन्नसौ प्रवेक्ष्यतीति कुतो नियमस्तत्राऽऽह—**विवेक इति** । पूर्वव्याख्याने तत्तदर्थनिर्धारणोपन्यासः सङ्कीर्णवद्भातीति न तत्र केषाञ्चिन्मनीषा समुन्मिषति- प्रकृते त्वसम्प्रकीर्णतया तत्तत्पदार्थनिर्णयोपयोगिन्यायो विविच्यते, तेनाऽत्र मन्दमध्यमयोरपि बुद्धिरवतरतीत्यर्थः । किं चानपेक्षिताधिकग्रन्थसद्भावान्न प्राचीने व्याख्याने श्रोतृणां प्रवृत्तिरत्र त्वपेक्षिताऽल्पग्रन्थे विवरणे प्रायशः सर्वेषां प्रवृत्तिः स्यादिति मत्वाह—**संक्षेपत इति** ।

नन्वनाप्तप्रणीतत्वाद्यभावेऽपि नेदं शास्त्रं व्याख्येयं विषयाद्यनुबन्धस्यानाभिहितत्वेन शास्त्रत्वाभावादित्याशङ्क्य सर्वव्यापाराणां प्रयोजनार्थत्वादादौ प्रयोजनमाह **तस्येति** प्रसाधितप्रामाण्यस्य व्याख्येयत्वेन मनसा संनिहितस्य गीताशास्त्रस्य संक्षेपतः संग्रहः संपिण्डितत्वमेकवाक्यत्वं, तेनेदं परमं फलं सन्निश्चितं श्रेयो निश्श्रेयसं कैवल्यम्,

अभ्युदयार्थोऽपि यः प्रवृत्तिलक्षणो धर्मो वर्णाश्रमांश्चोद्दिश्य विहितः स च देवादिस्थानप्राप्तिहेतुरपि सन्नीश्वरार्पणबुद्ध्यानुष्ठीयमानः सत्त्वशुद्धये भवति फलाभिसन्धिवर्जितः शुद्धसत्त्वस्य च ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते । यथा चेममर्थमभिसन्धाय वक्ष्यति—'ब्रह्मण्याधाय

---

अवान्तरफलं तु तत्र तत्रावान्तरवाक्यभेदेन मनोनिग्रहादि विवक्ष्यते । निश्श्रेयसं च द्विविधं—निरतिशयसुखाविर्भावो निश्शेषानर्थोच्छित्तिश्च । तत्राद्यमुदाहरति—**परमिति** । द्वितीयं दर्शयति—**सहेतुकमिति** । संसारोपरमस्यात्यन्तिकत्वं प्रतियोगिनः संसारस्य पुनरुत्पत्त्ययोग्यत्वं, तच्च स्वापमूर्च्छादिव्यवच्छेदार्थं विशेषणं तदेव साधयितुं सहेतुकस्येत्युक्तम् । उक्तं फलं समुचितादेकाकिनो वा कर्मणः स्यादिति तस्यैव शास्त्रप्रतिपाद्यतेत्यशङ्क्याभिधेयमभिधित्समानः समाधत्ते—**तच्चेति** । आत्मज्ञाननिष्ठाशेषत्वेन कर्मनिष्ठाऽत्रोच्यते ।—प्राधान्येन त्वात्मज्ञाननिष्ठैवात्र प्रतिपाद्यत इत्यर्थः । ननु शेषिणी निष्ठा कुतो न भवति संन्यासात्कर्मनिष्ठायाः शेषत्वात्, तत्राऽऽह—**सर्वेति** । संन्यासद्वारेणाऽसकृदनुष्ठितश्रवणादेः शेषिणी निष्ठा सिध्यति, शेषत्वं च कर्मणस्तत्र परस्पराश्रयत्वमित्यर्थः । ननु 'यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्' इति वाक्यशेषात्समुचितमात्मज्ञानमत्र प्रतिपाद्यते नेत्याह—**तथेति** । सर्वकर्मसंन्यासपूर्वकमात्मज्ञाननिष्ठारूपं धर्मं निःश्रेयससाधनं प्रयोजनं प्रागुक्तं परामृशति—**इममेवेति** । वक्तृभेदादभिप्रायभेदाशङ्कां वारयति—**भगवतैवेति** । उक्तमनुगीतास्विति सम्बन्धः । ब्रह्मणः पदं पूर्वोक्तं निःश्रेयसं, तस्य वेदनं लाभस्तत्र विशिष्टो ज्ञाननिष्ठारूपो धर्मः समर्थो भवतीत्यर्थः । यज्ञदानादिवाक्यस्य तु तद्व्याख्यानावसरे तात्पर्यं वक्ष्यते । कर्मत्यागस्य भगवतोऽभिप्रेतत्वे वाक्यान्तरमनुगीतागतमेवोदाहरति—**तत्रैवेति** । धर्माधर्मापूर्वासंसर्गित्वे हेतुमाह—**नैवेति** । क्रियाद्वयसम्बन्धाभावात्तन्निवृत्त्या पूर्वाभ्याससम्बन्धे प्राप्तमर्थमाह—**यः स्यादिति** । वागादिबाह्यकरणव्यापारविरहितत्वं तूष्णीमित्युच्यते, किञ्चिदचिन्तयन्निति स्वन्तःकरणव्यापाराभावोऽभिप्रेतो, द्विविधकरणव्यापारविरहितः सन्प्रागुक्तो योऽधिकारी केवलमेकस्मिन्नद्वितीये ब्रह्मण्यासनमवस्थानं तत्र लीनस्तस्मिन्नेव समाप्तिभागी स्यात्तस्याऽऽप्रम्प्रज्ञातसमाधिनिष्ठस्य सर्वकर्मत्यागहेतुकं ज्ञानं मुक्तिहेतुर्भवतीत्यर्थः । न केवलमनुगीतास्वेव यथोक्तं ज्ञानमुक्तं किन्तु प्रकृतेऽपि शास्त्रे

कर्माणि यतचित्ता जितेन्द्रियाः, योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये'।—इमं द्विप्रकारं धर्मं निःश्रेयसप्रयोजनं च वासुदेवाख्यं परब्रह्माभिधेयभूतं विशेषतोऽभिव्यञ्जयद् विशिष्टप्रयोजनसम्बन्धाभिधेयवद्गीताशास्त्रं, यतस्तदर्थविज्ञानेन समस्तपुरुषार्थसिद्धिरतस्तद्विवरणे यत्नः क्रियते मयेति।

---

समाप्त्यवसरे दर्शितमित्याह—**इहापीति**। नन्वत्र निवृत्तिलक्षणधर्मात्मकं ससंन्यासमात्मज्ञानमेव न प्रतिपाद्यते 'कुरु कर्मैव तस्मात्त्वम्' इत्यादौ प्रवृत्तिलक्षणस्याऽपि धर्मस्य वक्ष्यमाणत्वाद्धर्मयोश्च प्रकृतत्त्वाविशेषात्तत्राह—**अभ्युदयार्थोऽपीति**। ननु वर्णिभिराश्रमिभिश्चानुष्ठेयत्वेनान्यत्र विहितस्यापि तस्य न युक्तं मोक्षसाधनस्वाधिकारे विधानं, देवादिस्थानप्राप्तिहेतुत्वेन मोक्षं प्रति प्रतिपक्षत्वात्। सत्यं, तथापि फलाभिलाषमन्तरेणेश्वरार्पणधिया कृतस्य बुद्धिशुद्धिहेतुत्वात्तस्येह वचनमित्याह—**स च देवादीति**। फलाभिसन्धिद्वारा कृतः सन्निति शेषः। प्रवृत्तिलक्षणधर्मस्योक्तरीत्या चित्तशुद्धिहेतुत्वेऽपि मोक्षहेतुत्वेन कुतो मोक्षाधिकारे निर्देशः स्यादित्याशङ्क्याह—**शुद्धेति**। प्रतिपाद्यते प्रागुक्तो धर्म इति शेषः। यदुक्तं फलाभिसन्धिवर्जितमीश्वरार्पणबुद्ध्यानुष्ठितं कर्म बुद्धिशुद्धये भवतीति, तत्र वाक्यशेषमनुकूलयति—**तथा चेति**। शास्त्रस्य प्रयोजनं ससाधनमुक्तमनूद्य विषयं दर्शयति—**इमामिति**। दर्शितेन फलेन शास्त्रस्य निष्ठाद्वयद्वारा साध्यसाधनभावः सम्बन्धो विषयेण विषयविषयित्वमिति विवक्षित्वाह—**विशेषत इति**। एवमनुबन्धत्रयविशिष्टं शास्त्रं व्याख्यानार्हमित्युपसंहरति—**विशिष्टेति**। सिद्धे व्याख्यानयोग्यत्वं व्याख्येयत्वे फलितमाह—**यत इति**।

# काव्यलक्षणम् ।

## ( रसगङ्गाधरे प्रथममाननम् )

---

**रमणीयार्थप्रतिपादकः शब्दः काव्यम् ।**

रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरता । लोकोत्तरत्वं चाह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेषः । कारणं च तदवच्छिन्ने भावनाविशेषः पुनःपुनरनुसन्धानात्मा । 'पुत्त्रस्ते जातः', 'धनं ते दास्यामि' इति वाक्यार्थधीजन्यस्याह्लादस्य न लोकोत्तरत्वम् । अतो न तस्मिन्वाक्ये काव्यत्वप्रसक्तिः । इत्थं च चमत्कारजनकभावनाविषयार्थप्रतिपादक-

---

**रमणीयता चेति** । ननु लोकोत्तरत्वं यथाकथञ्चिच्चेदुक्तदोषः, आत्यन्तिकं चेद्ब्रह्मानन्द एवात आह—**लोकोत्तरत्वं** चेति । अनुभवसाक्षिक इत्यनेन तदन्यप्रमाणनिरासः । स चानुभवः सहृदयानामेव । एवं च नोक्तदोष इति भावः । ज्ञानं च भावनारूपमेवं नान्यदित्याह—**कारणं चेति** । तदवच्छिन्ने चमत्कारत्वापरपर्यायलोकोत्तरत्वरूपजात्यवच्छिन्ने । विशेषो न तु सामान्यम् । अत एव तत्स्वरूपमाह—**पुनरिति** । लोकोत्तरेति विशेषणकृत्यमाह—**पुत्रस्त इत्यादि** । अत्र वाक्यार्थद्वयम् । तथा सति परिष्कृतं लक्षणमाह—**इत्थं चेति** । उक्तार्थसिद्धौ चेत्यर्थः । फलितमित्यत्रान्वयः । यत्किञ्चिच्चमत्कारजनकज्ञाने समूहालम्बनविधया भासमानान्यार्थप्रतिपादकशब्दे काव्यत्ववारणाय ज्ञानेत्यपहाय भावनेत्युक्तम् । शब्दत्वमित्यस्य काव्यत्वमित्यत्रान्वयः धारावाहिकसकलज्ञानविषयकत्वाविशिष्टभावनात्वं

शब्दत्वम्, यत्प्रतिपादितार्थविषयकभावनात्वं चमत्कारजनकतावच्छेदकं तत्त्वम्, स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतावसंसर्गेण चमत्कारत्ववत्त्वमेव वा काव्यत्वमिति फलितम्।

यत्तु प्राञ्चः 'अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यम्' इत्याहुः, तत्र विचार्यते—शब्दार्थयुगलं न काव्यशब्दवाच्यम्, मानाभावात्। काव्यमुच्चैः पठ्यते, काव्यादर्थोऽवगम्यते, काव्यं श्रुतमर्थो न ज्ञातः, इत्यादिविश्वजनीनव्यवहारतः प्रत्युत शब्दविशेषस्यैव काव्यपदार्थत्वप्रतिपत्तेश्च। व्यवहारः शब्दमात्रे लक्षणयोपपादनीय इति चेत्, स्यादप्येवम्, यदि काव्यपदार्थतया पराभिमते शब्दार्थयुगले काव्यशब्दशक्तेः प्रमापकं दृढतरं किमपि प्रमाणं स्यात्। तदेव तु न पश्यामः। विमतवाक्यं त्वश्रद्धेयमेव। इत्थं चासति काव्यशब्दस्य शब्दार्थयुगलशक्तिग्राहके प्रमाणे प्रागुक्तव्यवहारतः शब्दविशेषे

---

तज्जनकतावच्छेदकं तादृशानुपूर्वीमत्त्वमित्यर्थः। तेन नोक्तदोषः। लाघवादाह—**स्वेति**। स्वं चमत्कारत्वम्। **जनकतावच्छेदकार्थेति**। अर्थे भावनानिष्ठजनकतावच्छेदकता विषयतासम्बन्धेन बोध्या। लक्ष्यतावच्छेदकं चैतत्समानाधिकरणं काव्यत्वाद्यनुगतव्यवहारेणास्वादजनकतया च सिद्धजातिविशेषरूपमुपाधिरूपं वा काव्यत्वं बोध्यम्। प्राञ्चः प्रकाशकृदादयः।

नत्वास्वादव्यञ्जकत्वस्योभयत्राविशेष एव मानमत आह—**काव्यमिति**। प्रत्युत वैपरीत्येन। आदिना काव्यं पठितमित्यादिसंग्रहः। **इत्यादीति**। इत्यादिसर्वजनीनव्यवहारात्। सार्वविभक्तिकस्तसिः। विशेषपदेन प्रागुक्तार्थकत्वसूचनम्। एवमग्रेऽपि। एवेनार्थनिरासः। प्रतिपत्तेश्च निर्णयाच्चेत्यन्वयार्थौ। **परेति**। प्रकाशकृदादीत्यर्थः। प्रत्यायकनिश्चायकम्। **विमतेति**। प्रकाशकृदित्यर्थः उपसंहरति—**इत्थंचेति**। तस्याश्रद्धेयत्वे चेत्यर्थः। शब्दस्येत्यस्योभयत्रशक्तावन्वयः। एतेन व्यवहाररूपविनिगमकत्वेन। प्रकरणार्थमुपसंहरति—**तदेवमिति**। एवमुक्तप्रकारेण। तस्यैव शब्दविशेषरूपस्यैव। प्रासङ्गिकमाह—**एषैव चेति**। अन्यथा वेदत्व-

सिद्ध्यन्तीं शक्तिं को नाम निवारयितुमीष्टे । एतेन विनिगमनाभावादुभयत्र शक्तिरिति प्रत्युक्तम् ।

तदेवं शब्दविशेषस्यैव काव्यपदार्थत्वे सिद्धे तस्यैव लक्षणं वक्तुं युक्तम्, न तु स्वकल्पितस्य काव्यपदार्थस्य । एषैव च वेदपुराणादिलक्षणेष्वपि गतिः । अन्यथा तत्रापीयं दुरवस्था स्यात् । यत्त्वास्वादोद्बोधकत्वमेव काव्यप्रयोजकं तच्च शब्दे चार्थे चाविशिष्टमित्याहुः, तन्न । रागस्यापि रसव्यञ्जकताया ध्वनिकारादिसकलालङ्कारिकसंमतत्वेन प्रकृते लक्षणीयत्वापत्तेः । किं बहुना नाट्याङ्गानां सर्वेषामपि प्रायशस्तथात्वेन तत्त्वापत्तिर्दुर्वारैव । एतेन रसोद्बोधसमर्थस्यैवात्र लक्ष्यत्वमित्यपि परास्तम् । अपि च काव्यपदप्रवृत्तिनिमित्तं शब्दार्थयोर्व्यासक्तम्, प्रत्येकमपर्याप्तं वा ? नाद्यः । एको न द्वाविति व्यवहारस्येव श्लोकवाक्यं न काव्यमिति व्यवहारस्यापत्तेः । न द्वितीयः । एकस्मिन्पद्ये काव्यद्वयव्यवहारापत्तेः । तस्माद्वेदशास्त्रपुराणलक्षणस्येव काव्यलक्षणस्यापि शब्दनिष्ठतैवोचिता ।

---

देरुभयत्राङ्गीकारे । दुरवस्था व्यवहारोच्छेदापत्तिरूपा । **लक्षणीयत्वेति** । तथा च तत्रातिव्याप्तिरिति भावः । **तथा च तत्रातिव्याप्तिरिति भावः** । सर्वेषामपि चेष्टादीनामपि ।

क्वचित्तदभावादाह—**प्रायश इति** । तथात्वेन रसव्यञ्जकत्वेन । तत्त्वापत्तिः काव्यत्वापत्तिः । मतत्रयसाधारणं दोषमाह—**अपि चेति** । व्यासक्तं **व्यासज्य**वृत्ति । **उचितेति** । यदि त्वास्वादव्यञ्जकत्वस्योभयत्राप्यविशेषाच्चमत्कारिबोधजनकज्ञानविषयतावच्छेदकधर्मत्वरूपस्यानुपहसनीयकाव्यलक्षणस्य प्रकाशोक्तलक्ष्यतावच्छेदकस्योभयवृत्तित्वाच्च काव्यं पठितम्, बुद्धं काव्यमित्युभयविधव्यवहारदर्शनाच्च काव्यपदपदप्रवृत्तिनिमित्तं व्यासज्यवृत्ति । अतएव वेदत्वादेरुभयवृत्तिर्प्रतिपादकः 'तदधीते' इत्यादिसूत्रस्थो भगवान्पतञ्जलिः संगच्छते । लक्षणयान्यतरस्मिन्नपि तत्वादेको न द्वावितिवन्न तदापत्तिः । तेनानुपहसनीयकाव्यलक्षणं प्रकाशोक्तं निर्बाधम् । एवमास्वादादौ वैलक्षण्यनिवेशादुक्तलक्षणद्वयमपि निर्बाधमिति नान्यमतमपि दुष्टमित्युच्यते, तर्ह्यस्तु तथा । सामान्यलक्षणं त्वदोषादिपदाघटितमेव तेषामपि मते । एवं च न कोऽपि दोष इति बोध्यम् ।

लक्षणे गुणालङ्कारादिविनिवेशोऽपि न युक्तः । 'उदितं मण्डलं विधोः' इति काव्ये दूत्यभिसारिकाविरहिण्यादिसमुदीरितेऽभिसरणविधिनिषेधजीवनाभावादिपरे 'गतोऽस्तमर्कः इत्यादौ चाव्याप्त्यापत्तेः । न चेदमकाव्यमिति शक्यं वदितुम् । काव्यतया पराभिमतस्यापि तथा वक्तुं शक्यत्वात् । काव्यजीवितं चमत्कारित्वं चाविशिष्टमेव । गुणत्वालङ्कारत्वादेरननुगमाच्च । दुष्टं काव्यमिति व्यवहारस्य बाधकं विना लाक्षणिकत्वायोगाच्च न च संयोगाभाववान्वृक्षः संयोगीतिवदंशभेदेन दोषरहितं दुष्टमिति व्यवहारे बाधकं नास्तीति वाच्यम् ।

'मूले महीरुहो विहङ्गमसंयोगी, न शाखायाम्' इति प्रतीतेरिवेदं पद्यं पूर्वार्धे काव्यमुत्तरार्धे तु न काव्यमितिस्वरसवाहिनो विश्वजनीनानुभवस्य विरहादव्याप्यवृत्तिताया अपि तस्यायोगात् । शौर्यादिवदात्मधर्माणां गुणानाम् । हारादिवदुपस्कारकाणामल-

---

तदाह—**लक्षण इति** । काव्यसामान्यलक्षण इत्यर्थः । आदिना संख्यादिपरिग्रहः । यथासंख्यमन्वयः । आदिना पतिप्रप्त्यादिपरिग्रहः । इदं च मध्यमाणिन्यायेनोभयान्वपि । **अव्याप्त्यापत्तेरिति** । गुणालङ्कारयोरभावादिति भावः । तथा **अकाव्यमितीति** । ननु काव्यजीवितं चमत्कारित्वं तत्रास्तीत्यत आह—**काव्येति** । ननु विलक्षणचमत्कारित्वं तत्रैवेति नोक्तदोषोऽत आह—**गुणत्वेति** । ननु काव्यधर्मत्वं वालङ्कारत्वमित्यनुगम एवेति चेत्सत्यम् । तथापि गुणालङ्कारादीत्यादिपदेनादोषावेति विशेषणमयुक्तमित्यभिमतम् । युक्तं चैतत् । दोषसामान्याभावनिवेशे काव्यव्यवहारस्य विरलविषयतापत्तेः, इदं काव्यं दुष्टमिति व्यवहारानापत्तेश्च । न चादोषपदेन स्फुटदोषराहित्यं विवक्षितम् स्फुटत्वं च शब्दबोधप्रतिबन्धकत्वम् । तेन निराकाङ्क्षत्वानासन्नत्वे गृह्येते । अन्यथा रसादिदोषाणां त्यागे बीजानापत्तिः । न ह्यदोषौ शब्दार्थावित्युक्ते रसादिदोषाभावः प्रतीयत इति अर्थशब्देन रसस्यापि ग्रहादिति भावः । तदाह—**दुष्टं काव्यमिति** । एवं च तेषामपि मते तादृशकाव्यलक्षणेऽदोषाविति मात्रस्यानिवेश इति बोध्यम् ।

ङ्काराणां च शरीरघटकत्वानुपपत्तेश्च । यत्तु 'रसवदेव काव्यम्' इति साहित्यदर्पणे निर्णीतम्, तन्न । वस्त्वलङ्कारप्रधानानां काव्यानामकाव्यत्वापत्तेः । न चेष्टापत्तिः, महाकविसम्प्रदायस्याकुलीभावप्रसङ्गात् तथा च जलप्रवाहवेगनिपतनोत्पतनभ्रमणानि कविभिर्वर्णितानि कपिबालादिविलसितानि च । न च तत्रापि यथाकथञ्चित् परम्परया रसस्पर्शोऽस्त्येवेति वाच्यम् । ईदृशरसस्पर्शस्य 'गौश्चलति,' 'मृगो धावति' इत्यादावतिप्रसक्तत्वेनाप्रयोजकत्वात् । अर्थमात्रस्य विभावानुभावव्यभिचार्यन्यतमतत्वादिति दिक् ।

---

प्रागुक्तरीतिसमुच्चायकः । ननु सामान्यलक्षणस्यादोषपदघटितत्वात्तथा व्यवहारोपपत्तिरत आह—**शौर्यादीति** । उत्कर्षाधायकत्वेन साम्यम् । एवं च विशेषलक्षणे

**स्वरसेति** । स्वारसिकस्येत्यर्थः । **विश्वेति** । सर्वजनीनेत्यर्थः । अपिः तेषां निवेशेऽपि सामान्यलक्षणे तेषां न निवेश इति न कोऽपि दोष इति भावः । **वस्त्विति** । प्रधानपदस्योभयत्रान्वयः । **आकुलीति** । उच्छेदेत्यर्थः । सम्प्रदायमेवाह—**तथा चेति** । विलसितानि चेति वर्णितानीत्यस्यानुषङ्गः न च तत्र रसोऽस्तीति भावः । यथाकथञ्चिदित्यस्यैव व्याख्या परम्परयेति । परम्परामेवाह—**अर्थेति** । सर्वस्यार्थस्येत्यर्थः ।



# THE AITAREYA—BRĀHMAṆA

## The Story of Śunah-Śepa.

The Vedas consist of two portions– the Mantras (hymns) and the Brāhmaṇas ( मन्त्रब्राह्मणात्मको हि वेदः ). Some excluded the Brāhmaṇas and regarded only the Mantra or the Samhitā portion as the Vedas, while others included the Kalpa-sūtras also in them (कैश्चिन्मन्त्राणामेव वेदत्वमाख्यातम् । कैश्चित्त कल्पसूत्राणामपि । उभयनिरासार्थोऽयमारम्भः ). Both Āpastamba and Sāyana regard the Brāhmaṇas as an integral part of the Śruti (revelation). The Brāhmaṇas form a well known class of Vedic composition distinct from the Mantras, which are a sort of commentary of the Vedas. They contain two parts (1) Vidhi – rules or directions of sacrifices and (2) ArthaVāda which is again four fold and consists of exegetical notes on the sacrifices illustrated by legends and traditions ( निन्दा प्रशंसा परकृतिः पुराकल्पश्च).

Each of the four Vedas (Ṛk, Yajus, Sāma and Atharva) has its own Brāhmaṇas appended to it. The Taittiriya and the Śatapatha Brāhmaṇas belong to the Yajurveda, the Gopatha to the Atharva Veda and the Pancavimsa to the Sāma Veda. The Brāhmaṇa of the Ṛg Veda is preserved in two works namely the Aitareya and the Kauṣitakī. The Aitareya appears to be the oldest of all the extant Brāhmaṇas. It consists of 8 pentades (पञ्चिका) of Adhyāyas subdivided into 285 sections (खण्ड).

The Brāhmaṇas are composed in crude Vedic prose. Besides the prose Mantras of the YajurVeda and the AtharvaVeda, the Brāhmans are the earliest prose works in Sanskrit composed in an abrupt and elliptical style. The legendary portions of the Brāhmaṇas are, however, comparatively simple and easy.

The Story of the Śunah-śepa is taken from the Aitareya Brāhmaṇa. Its main story is of the projected sacrifice, deliverance, and exaltation of Śunah-śepa, whose name is etymologically allied to the Greek 'Cynosure,' applied to the Northern Pole-Star (Dhruva), the fixed centre of the revolving heavens and guide of travellers (W. H. Robinson). MaxMuller refers to this legend as "full of genuine thought and feeling and most valuable as a picture of life and record of early struggles." It is probably the earliest Indian story which is not purely mythological. In accordance with the ordinary Indian concept that the "stars are the souls of the righteous who go to heaven" (Śat. Brah. VI, 5, 4, 8,) and that the seven great Ṛṣis of India are identified with the seven stars of the Constellation "Ursa-major" "the great bear which circles round and points to the Pole-star, there is an evident reference to Śunahśepa's exaltation in the Cynosure constellation.

Śunah-Śepa or Śunahśepha (lit. dog-tailed cynosure) is the name of a Vedic Ṛṣi (having the patronymic Ājigarti, as son of Ajigarta and regarded as the Ṛṣi of the hymns of Ṛg Veda I,24-30, IX 3). According to the Aitareya Brāhmaṇa (VII 13-18) the story runs thus. King Hariścandra, whose priest was Viśvāmitra, being childless, made a vow that on getting a son he would sacrifice him to God Vaurṇa ; a son was born to him named Rohita, but Hariścandra put off on various pretexts the fulfilment of his vow, and when he at length consented to perform it, his son declined to be sacrificed ; as a punishment Hariścandra was seized by Varuṇa attacked with dropsy. His son Rohita, retiring to the forest passed six years there at Indra's advice, until he met a poor Brāhmaṇa Ṛṣi named Ajigarta, who had three sons, the second of whom Śunahśepa was purchased by Rohita for a hundred cows to serve as a substitute for himself. Varuṇa— accepted him as a ransom and he was about to be sacrificed with Viśmamitra as a Hotri-priest. Śunahśepa saved himself by reciting verses in praise of various dieties, and was received into the family of Viśvāmitra as one of his sons under the name of Devarāta. Hariścandra was also cured of dropsy.

